**मठ** पु० मठत्यत्र मठ-घञर्थे क । छात्राद्यावासे, देवागारे, गन्त्रीरथे च । [त । विभागे भ्वा० आत्म० मण्डते ।

**मड** मोदे चु०उभ०अक० सेट् इदित् । मण्डयति-ते अममण्डत्

**मड** भूषणे चुरा०उभ० पक्षे भ्वा०पर०सक०सेट् इदित् । मण्डयति-ते मण्डति अममण्डत्-त अमण्डीत् ।

**मडक** पु० मडि-कुन् पृ० नलोपः । धान्यभेदे (मेडुया) ।

**मड्डु** पु० मज्जन्ति अन्ये शब्दा अत्र मज्ज+उ पृ० । वाद्यभेदे (विपुलडमरौ) । स्वार्थे मन् । अत्रैव ।

**मण** अव्यक्तशब्दे भ्वा०प०अक०सेट् । मणति अमाणीत् अमणीत्

**मणि**(णी) पु० स्त्री० मण-इन् स्त्रीत्वपक्षे वा ङीप् । मुक्तादौ रत्ने 'मणिहारावलिरामणीयकमिति, स्फटनीलमणीरुह-त्विषेति च नैषधम् स्तम्बयपात्रभेदे अलिञ्जरे (जाला) लिङ्गाग्रे, नागभेदे मणिबन्धे च । स्वार्थे कन् अलिञ्जरे न० ।

**मणिकर्णिका** स्त्री०मणिकर्णः मणिमयकर्णभूषणमस्त्यस्यां ठन् विष्णतपस्यादर्शनात् विस्मयेन शिवस्य मणिमयकुण्डल पतनस्थाने काशीस्थे तीर्थभेदे ।

**मणिकार** पु० मणिमयं भूषणं करोति कृ-अण् । (जह्वरि) मणिमयभूषणकारके प्रत्यक्षादिचतुःखण्डात्मकतत्त्वार्थ-चिन्तामणिनामकग्रन्थकारे गङ्गेशोपाध्याये च

**मणिकूट** पु० मणीनां कूट इव मणिप्रचुरं कूटं शृङ्गं वास्य । उत्तरदेशस्थे पर्व्वतभेदे । [ऋषभाख्यौषधे च ।

**मणिच्छिद्रा** स्त्री० मणिरिव छिद्रमस्याम् । मेदानामौषधे,

**मणित** न० मण-क्त । रतिकाले स्त्रीणामव्यक्तशब्दभेदे ।

**मणिद्वीप** पु० मणिमयः मणिप्रचुरः द्वीपः । क्षीरसमुद्रम-ध्यस्थे ध्येये द्वीपभेदे ।

**मणिपर्व्वत** पु० ६त० । पर्व्वतभेदे ।

**मणिपूर** न० मणिभिरिव पूर्यते प्रचुरदीप्तिमत्त्वात् । तन्त्रोक्ते नाभिदेशस्थे सुषुम्नानाडीमध्यगते पद्माकारे चक्रभेदे ।

**मणिबन्ध** पु० मणिर्बध्यतेऽत्र बन्ध-घञ् । प्रकोष्ठपाण्योर्मध्यस्थे करग्रन्थौ, सैन्धवलवणाकरे पर्व्वतभेदे च ।

**मणिभूमि** स्त्री०६त० । मणीनामाकरे । [खचिते मण्डपे ।

**मणिमण्डप** पु० मणिमयः मणिप्रचुरः मण्डपः । मणि-

**मणिमन्थ** पु० मणिर्मथ्यते निःसार्य्यतेऽस्मात् मन्थ-अपादाने घञ् । पर्व्वतभेदे । स कारणत्वेनास्त्यस्य अच् । सैन्धवलवणे तस्य मणिमन्थ (मन्थ) सिन्धुदेशान्तिकस्थपर्व्वतजातत्वात् ।

**मणिमाला** स्त्री०६त० । मणीनां मालेव । हारभेदे दन्तक्षत-विशेषे, दीप्तौ, लक्ष्म्याञ्च । [मणिवर्णे पु० ।

**मणिराग** न० मणेरिव रागो वर्णोऽस्य । हिङ्गुले । ६त० ।

**मणिवीज** पु० मणय इव वीजान्यस्य । दाडिमे ।

**मणिसर** पु० मणीन् सरति कारणत्वेन गच्छति सृ-अच् । मणिखचिते हारभेदे ।

**मण्ड** पु०न० मन-ड तस्य नेत्त्वम् । सर्व्वान्नानामग्ररसे, (माड) सारे, पिच्छे च । आमलक्यां, सुरायाञ्च स्त्री० । दधिमण्डे (मात्) न० । एरण्डवृक्षे, शाकभेदे, भूषायां च पु० ।

**मण्डक** पु० मडि-ण्वुल् । पिष्टकभेदे । [भूषायाम् न० ।

**मण्डन** पु० मण्डयति मडि-ल्यु । अलङ्कारके । भावे ल्युट ।

**मण्डप** पु०न० मडि-घञ् मण्डं भूषां पाति रक्षति पा-क मडि-कपन् वा । जनविश्रामस्थाने, देवादिगृहे च । यथा चण्डीमण्डपः विष्णुमण्डपइत्यादि । मण्डपानकर्त्तरि त्रि० । निष्पाव्यां (सूकशिम्बीभेदे) स्त्री० ।

**मण्डल** न०मडि-कलच् । चक्राकारेण वेष्टने, यथा सूर्य्यमण्डलं भू मण्डलम् चतुःशतयोजनमिते-देशभेदे, मण्डलाका-रेण विहिते पदार्थे, द्वादशराजचक्रे, गोले, समूहे 'अर्थ-मण्डलमण्डल'मिति वोपदेवः चक्रे, 'मण्डलाकारपादाग्रं मण्डलं स्थानमीरित'मित्युक्ते धन्विनां स्थानभेदे मण्डलं सर्व्वतोवृत्ति'रित्युक्ते 'सैन्यव्यूहभेदे, कल्पितरेखासन्नि-वेशेन रचिते पदार्थे च यथा षड्मण्डलं सर्व्वतोभद्रमण्डल-मित्यादि । विम्बे त्रि०स्त्रियां गौ०ङीष् ।सा गण्डदूर्व्वायाञ्च कुक्कुरे, सर्पभेदे च पु० । ततः स्वार्थे कन् । विम्बे, कुष्ठभेदे, आदर्शे, मण्डलाकारे, व्यूहे कुक्कुरे च पु० ।

**मण्डलनृत्य** न० मण्डलाकारेण नृत्यम् । चक्राकारेण परि-भ्रमणरूपे नृत्ये । [याम् ।

**मण्डलपत्त्रिका** स्त्री०मण्डलाकारं पत्त्रमस्याः ; रक्तपुनर्णवा-

**मण्डलाधीश** पु० मण्डलस्य देशविशेषस्याधीशः । मण्डलेश्वरे चतुःशतयोजनमितदेशाधिपे । [वटवृक्षे च ।

**मण्डलिन्** पु०मण्डलं कुण्डलनमस्त्यस्य इनि । सर्पे, विडाले

**मण्डित** त्रि० मडि-क्त । भूषिते । [मुनिभेदे बन्धभेदे च ।

**मण्डूक** पु० मण्डयति वर्षासमयम् मडि-ऊक । भेके, शोणाके,

**मण्डूकपर्णी** पु० मण्डूक इव पर्णमस्य । श्योनाके, शोणाके च । मञ्जिष्ठायां स्त्री० टाप् ङीप् वा । ब्राह्म्यां (वामनहाटि) ओषधिभेदे (थुलकुड़ी) च स्त्री० ङीप् ।

**मण्डूकी** स्त्री० मण्डूक इव पत्त्रमस्त्यस्य अच् गौरा०ङीष् । मञ्जिष्ठायाम्, आदित्यभक्तायां, द्राक्षायाम्, ओषधिभेदे, प्रगल्भनायिकायां, मण्डूकयोषिति स्त्री० ङीप् ।

**मण्डूर** न० मडि-ऊरच् । लौहमले । [जले (आलिपना)

**मण्डोदक** न० मण्डइवोदकम् । आतपतण्डुलचूर्णमिश्रित-

**मत** त्रि॰ मन-क्त। सम्मते, अभिप्रेते, ज्ञाते, अर्चिते च। भावे-क्त।
सम्मतौ, अभिप्राये, ज्ञाने, अर्च्चायाञ्च न॰।

**मतङ्ग** पु॰ माद्यति अनेन मद-अङ्गच् दस्य तः। मेघे, मुनिभेदे च

**मतङ्गज** पु॰ मतङ्गात् स्वेच्छातः जन-ड। गजे।

**मतल्लिका** स्त्री॰ मतं मतिमल्लति भूषयति ण्वुल् पृ॰। प्रशस्ते
अव्युत्पन्नोऽयमित्येके। [आर्य्यां, शाकभेदे च

**मति** स्त्री॰ मन-भावे क्तिन्। ज्ञाने, इच्छायां, स्मृतौ च। क्तिच्।

**मतिदा** स्त्री॰ मतिं ददाति दा-क। ज्योतिष्मतीलतायाम्।
(शिमुडी)। [भ्रंशे भ्रान्तौ

**मतिभ्रम** पु॰ मतेर्भ्रमः अयथार्थविषयत्वेन भ्रमणम्। बुद्धि-

**मतिविभ्रम** पु॰ मतिं बुद्धिं विभ्रमयति वि+भ्रम-णिच् अण्।
उन्मादरोगे,।

**मत्क** पु॰ मद-क्विप् स्वार्थे कन्। मत्कुणे (छारपोका) मामिदम्
कन्। मत्सम्बन्धिनि 'मैतन्मतं मत्कमि'ति भट्टिः।

**मत्कुण** पु॰ मद-क्विप् कुणयति कुण-अच् कर्म॰। कीटभेदे
(छारपोका)। [नागः

**मत्कुणारि** पु॰ ६त॰। (सिद्धि) भङ्गायां तत्सम्पर्केण हि तस्य

**मत्त** पु॰ मद-क्त। दुर्मदे गजे। क्षीवे, मदयुक्ते, हृष्टे च त्रि॰।

**मत्तकाशि(सि)नी** स्त्री॰ मत्तेव क्षीवेव काशते कासति गच्छति
वा णिनि पृ॰ह्रस्वः। उत्तमयोषिति, स्त्रीमात्रे च।

**मत्तमयूर** पु॰ मत्तो मयूरो यस्मात्। मेघे, छन्दोभेदे च।

**मत्तवारण** पु॰ कर्म॰। मत्तहस्तिनि। मत्तं वारयति वृ-णिच्-
ल्यु। प्रासादवरण्डे न॰। (वारेण्डा)

**मत्तालम्ब** पु॰ मत्तैरालम्ब्यते आ+लबि-घञ्। (वारेण्डा)
प्रासादवरण्डे।

**मन्त्र** गुप्तभाषणे चु॰आ॰सक॰ सेट् इदित्। मन्त्रयते अममन्त्रत

**मत्सर** पु॰ मद-सर। अन्यशुभद्वेषे, परसम्पत्त्यसहने, क्रोधे च
तद्वति, कृपणे च त्रि॰। मक्षिकायां स्त्री॰। [मत्सी

**मत्स्य** पु॰ मद-स्यन्। जलजन्तुभेदे (माछ) जातौ स्त्रियां ङीप्।

**मत्स्यकरण्डिका** स्त्री॰ मत्स्यानां करण्डिकेवाधारः। (खालुइ)
मत्स्यरक्षणाधारे पात्रभेदे। [वल्याम्, जलपिप्पल्याञ्च

**मत्स्यगन्धा** स्त्री॰ मत्स्यस्येव गन्धोऽस्याः। व्यासमातरि, लाङ्ग-

**मत्स्यण्डी** स्त्री॰ मत्स्यं स्यन्दते अच् पृ॰। खण्डविकारे
(मिछरि) स्वार्थे कन्। अत्रैव।

**मत्स्यधानी** स्त्री॰ मत्स्या धीयन्तेऽस्यां धा-ल्युट् ङीप्। मत्स्य-
रक्षणाधारे (खालुइ) पात्रभेदे। [कटुकायाम् (कट्की)

**मत्स्यपित्ता** पु॰मत्स्यस्य पित्तमिव रसोऽस्यस्याः अच्। कटुरो-

**मत्स्यरङ्ग** पु॰ मत्स्येन रजति रञ्ज-कर्त्तरि संज्ञायां घञ्।
(माछराङ्गा) पक्षिभेदे त्रिभुवनविदितो हा मत्स्यरङ्ग इत्युद्भटः

**मत्स्यराज** पु॰ ६त॰। रोहितमत्स्ये।

**मत्स्यविन्ना** स्त्री॰ विद-लाभे क्तः मत्स्यो मत्स्यरसो विन्नो यया
तत्त्यतिक्तत्वात्। कटुकायाम्।

**मत्स्यवेधन** न॰ मत्स्यो विध्यतेऽनेन विध-ल्युट्। वडिशे स्त्रीत्व-
मपि ङीप्। मद्गुपक्षिणि (पानकौड़ि) पु॰।

**मत्स्याक्षी** पु॰मत्स्यस्याक्षीव पुष्पमस्याः। ब्राह्म्यां (वामनहाटि)
सोमलतायां, गण्डदूर्व्वायां, हिलमोचिकायाञ्च।

**मत्स्याङ्गी** स्त्री॰ मत्स्यइव तत्पित्तमिवाङ्गं तिक्तत्वात् यस्याः।
हिलमोचिकायाम्। [जलपिप्पल्याम्।

**मत्स्यादनी** स्त्री॰ मत्स्यइवाद्यते आस्वाद्यते अद-कर्म्मणि ल्युट्।

**मत्स्योदरी** स्त्री॰ मत्स्यगन्धयुक्तमुदरमस्याः। व्यासमातरि,
मत्स्यगन्धायां, काशीस्थे तीर्थभेदे च। [थः, मथः माथः

**मथ** विलोडने भ्वा॰पर॰सक॰ सेट्। मथते अमथीत् ज्वला॰ वा

**मथ** वधे सक॰ क्लेशे अक॰ भ्वा॰ पर॰ सेट् इदित्। मन्थति। अमन्थीत्

**मथन** न॰ मथ-ल्युट्। वधे, क्लेशे, विलोड़ने च। 'क्षीरोदम-
थनोद्भूत' इति पुराणम्। [कारिकावृक्षे

**मथन** पु॰ मथ्यतेऽग्निचयनार्थमसौ मथ-कर्म्मणि ल्युट्। गणि-

**मथित** न॰ मथ-क्त। निर्ज्जलतक्रे। पीड़िते, हते च त्रि॰।

**मथुरा** स्त्री॰ मथ-उरच्। स्वनामख्यातायां नगर्याम्।

**मद** हर्षे दि॰पर॰अक॰ सेट् शमा॰। माद्यति अमदत् अमादीत्
अमदीत्। निष्ठायामनिट् पुषादिरयं तेन अमददित्ये-
वेति पाणिनीयाः। घटा॰ मदयति। [घटा॰ मदयति

**मद** गर्व्वे दैन्ये च भ्वा॰पर॰अक॰सेट्। मदति अमादीत्-अमदीत्

**मद** तर्पणे चु॰आ॰सक॰सेट्। मादयते। अमीमदत।

**मद** जाड्ये, स्वप्ने, मदे च। आमोदे स्तुतौ दीप्तौ यथायथं अक॰
सक॰ च भ्वा॰ आत्म॰ इदित्। मन्दते अमन्दिष्ट।

**मद** पु॰ मद-अच्। हस्तिगण्डजले, आमोदे गर्वे रेतसि,
मृगमदे, मत्ततायाम्, नदे, कल्याणकरे वस्तुनि च।

**मदकट** पु॰ मदेन कटति कट-अच्। षण्डे (षांड़) मदोत्कटे त्रि॰

**मदकल** पु॰ मदेन कलति कल-अच्। मत्तहस्तिनि-मदोत्कटे
अव्यक्तशब्दकारिणि च त्रि॰। [मदिरायां स्त्री॰ टाप्।

**मदगन्ध** पु॰ मदस्य हस्तिदानस्येव गन्धोऽस्य। सप्तच्छदवृक्षे

**मदघ्नी** स्त्री॰मदं मदिराजां मत्ततां हन्ति-हन-ट ङीप्। पूति-
कायाम्। [ङीप्।

**मदन** पु॰ माद्यत्यनेन मद-करणे ल्युट्। कामदेवे, सुरायां स्त्री॰

**मदनक** पु॰ मदयति मद-णिच्-ल्युट् स्वार्थे कन्। दमनकवृक्षे

**मदनचतुर्द्दशी** स्त्री॰ मदनस्य तदुपासनार्था चतुर्द्दशी। चैत्र-

शुक्लचतुर्दश्याम् । [शुक्लत्रयोदश्याम् । मदनतिथ्यादयोऽप्यत्र
मदनत्रयोदशी स्त्री० मदनस्योपासनार्थां त्रयोदशी । चैत्र-
मदनमोहन पु० मदनमपि मोहयति मुह-णिच् ल्यु । श्रीकृष्णे
मदनसदन न० ६त० । स्त्रीचिह्नभेदे । ज्योतिषोक्ते लग्ना-
वधिके सप्तमे स्थाने च । [दादौ दशाभेदे ।
मदनावस्था स्त्री० मदनकृतावस्था । कामिनां स्मरकृते उन्मा-
मदनी स्त्री० माद्यत्यनया मद-ल्युट् । सुरायाम्, कस्तूर्याम्,
अतिमुक्तके च ।
मदभञ्जिनी स्त्री० मदं भनक्ति भन्‍ज-णिनि । शतमूल्याम् ।
मदयन्ती स्त्री० मद-णिच्-शतृ गौ० ङीप् । वनमल्लिकायाम्
(काठमल्लिका) स्वार्थे कन् ह्रस्वः । तत्रैवार्थे ।
मदयित्नु पु० मद-णिच्-इत्नुच् । कामदेवे, मेघे, शौण्डिके,
च । मद्ये न० । मादके त्रि० । [तालवृक्षे ।
मदसार पु० मदं सारयति गमयति सृ-णिच्-अण् उप० ।
मदाढ्य पु० मदेन मदकारणेन (ताड़ि) रसेनाढ्यः । ताल-
वृक्षे । रक्तझिण्ट्याम् स्त्री० ।
मदालापिन् पु० मदेनालपति आ+लप-णिनि । कोकिले ।
मदिरा स्त्री० मद-किरच् । 'माध्वीकं पानसं द्राक्षं खार्ज्जूरं
तालमैक्षवम् । मैरेयं माक्षिकं टाङ्कं मधूकं नारिकेलजम् ।
मुख्यमन्नविकारोत्थं मद्यानि द्वादशैव तु'इत्युक्ते मद्यसा-
मान्ये, मत्तखञ्जने च । रक्तखदिरे पु० ।
मदोत्कट पु० मदेन दानवारिणा उत्कटः उदग्रः । मत्तगजे ।
मदिरायां स्त्री० । मदोद्धते त्रि० ।
मदोदग्र पु० मदेन उदग्रः उग्रः । मत्ते'मदोदग्राः ककुद्मन्त'
इति रघुः । नार्यां स्त्री० ।
मदोद्धत त्रि० मदेन उद्धतः । मत्ते । [पक्षिभेदे ।
मद्गु पु० मस्ज-उ दृ० धातोर्मदादेशः गुक् च । (पानिकौड़ि)
मद्गुर पु०मद-उरच् गुक् च । (मागुर) मत्स्यभेदे । स्वार्थे कन् तत्रैव
मद्य न० माद्यत्यनेन करणे यत् । मदिराशब्दे उक्तमाध्वी-
कादिद्वादशविधे मादकद्रव्ये । [धातकीवृक्षे (धाइफुल) ।
मद्यवासिनी स्त्री० मद्यस्येव वासो गन्धो विद्यतेऽस्याः इनि ।
मद्यबीज न०६त०। किण्वादौ (वाकस) मद्यकारणे पदार्थजाते
मद्यसन्धान न० मद्याय मद्योत्पादनाय सन्धानम् अभिषवः ।
मद्योत्पादनव्यापारे ।
मद्यामोद पु० मद्यस्येव आमोदः गन्धोऽस्य । बकुलवृक्षे ।
मद्र पु० मद-रक् । 'विराटपाण्ड्ययोर्मध्ये पूर्वदक्षिणतेन च ।
मद्रदेशः समाख्यात' इत्युक्ते देशे, नृपे, मङ्गले च ।
मधु न०मन-उ नस्य धः । मद्ये,'गर्ज्ज गर्ज्ज क्षणं मूढ ! मधु-
यावत् पिबाम्यह'मिति चण्डी । क्षौद्रे, 'मधु वाता ऋता-
यते' इति मधुसूक्तम् पुष्परसे 'मधु द्विरेफः कुसुमैकपात्रे'
इति कुमारः । जले, मधुररसे च । 'मधु नक्तमुत' इति मधुसूक्तम् ।
विष्णुकर्णमलजाते दैत्यभेदे । 'विष्णु-
कर्णमलोद्भूतावसुरौ मधुकैटभाविति पुराणं कुम्भीनस्या
भर्त्तरि दैत्यभेदे वसन्तर्त्तौ,चैत्रे मासि,(मौल) वृक्षभेदे, अ-
शोकवृक्षे,यष्टिमधौ च पु०। प्राणिनां शुभाशुभकर्मणि न०।
जीवन्त्यां स्त्री० । स्वार्थे कन् । यष्टिमधौ,त्रपुणि च न० ।
मधुकर पु० मधूनि करोति सञ्चित्य निष्पादयति कृ-अच् ।
भ्रमरे, तद्योषिति स्त्री० ङीप् । कामिजने, भृङ्गराजे
च पु० । मधुकृदादयोऽपि भ्रमरे ।
मधुकर्कटी स्त्री० मधुः मधुरा कर्कटी । जम्बीरभेदे, मिष्ट-
खर्जूरिकायाञ्च । स्वार्थे कन् ह्रस्वः टाप् । बीजपूरे ।
मधुका स्त्री० मध्विव इवार्थे कन् । यष्टिमधौ, मधुपर्णीवृक्षे च
मधुकोष पु० मध्वर्थं कृतः कोषः । (मौचाक) मक्षिकाकृते
कोषाकारे पदार्थे । [कन् । तत्रैव ।
मधुक्षीर पु० मधु मधुरं क्षीरमस्य । खर्जूरवृक्षे । [स्वार्थे
मधुखर्ज्जूरी स्त्री०मधुर्मधुरा खर्जूरी । अतिमिष्टखर्जूरीभेदे ।
मधुज न० मधुनो जायते जन-ड । सिक्थके (मोम) । मधुदैत्य
मेदोजातायां भूमौ स्त्री० । [(कमलालेबु) ।
मधुजम्बीर पु० मधुर्मधुरः जम्बीरः । अतिमिष्टजम्बीरे ।
मधुजित् पु० मधुनामासुरं जितवान् जि-भूते क्विप् । विष्णौ
मधुभिन्मधुरिपुप्रभृतयोऽप्यत्र ।
मधुतृण न० कर्म० । इक्षौ । पुंस्त्वमपि । [मधुत्रिकमप्यत्र न० ।
मधुत्रय न० मधूनां मधुराणाम् त्रयम् । मधुघृतसितानां त्रये
मधुदूत पु० मधोर्वसन्तस्य दूत इवाग्रसरत्वात् । आम्रवृक्षे ।
पाटलायां स्त्री० ङीप् ।
मधुद्रव पु० मधुरो द्रवोऽस्य । रक्तशिग्रौ ।
मधुद्रुम पु० मध्वर्थं मद्यार्थं द्रुमः । (मौल) वृक्षभेदे, तत्पुष्पेण
हि पौष्पमधुसम्भव । [विकारादौ ।
मधुधूलि स्त्री० मधुर्मधुरा धूलिरिव । खण्डे (खांड) गुड़-
मधुधेनु स्त्री० दानार्थं कल्पितायां मधुप्रभृतिद्रव्यकृतधेनौ ।
मधुप पु० मधु पिबति पा-क । भ्रमरे । मधुपायिनि त्रि०
'प्रारब्धो मधुपैरकारणमहो' इत्युद्भटः ।
मधुपर्क न० पृच-घञ् मधुनः पर्कः योगो यत्र । मधुयुते
कांस्यपात्रस्थे कांस्यपात्रान्तरेणावृते दध्नि 'दधिसर्पिर्जलं
क्षौद्रं सिता चैतैश्च पञ्चभिः, प्रोच्यते मधुपर्कस्तु' इत्युक्ते
दध्यादिद्रव्यपञ्चके च ।

मधुपर्णी स्त्री० मधु इव हितकरं पर्णं यस्याः। गुडूच्यां, गाम्भार्य्यां, नीलीवृक्षे, वराहक्रान्तायाम्, मधुवीजपूरे च।
मधुपालिका स्त्री० मधूनि पालयति पाल-ण्वुल्। गाम्भार्य्याम्
मधुपीलु पु० कर्म०। मधुरपीलौ।
मधुपुरी स्त्री० मधोर्दैत्यस्य पुरी। मथुरायाम्।
मधुपुष्प पु०मधुप्रचुरं पुष्पं यस्य। मधुद्रुमे,(मौल)शिरीषवृक्षे, अशोकवृक्षे, वकुलवृक्षे च। दन्तीवृक्षे, नागदन्तीवृक्षे च स्त्री० टाप्। [भूमिजम्बूवृक्षे।
मधुप्रिय पु० मधु मधुरं प्रियं यस्य। बलरामे। मधुइव प्रियः।
मधुफल पु० मधुरं फलं यस्य। मधुनारिकेले। मधुखर्जूरिकायां स्त्री० टाप्।
मधुवल्ला स्त्री० मधु वल्लं यत्र। माधवीलतायाम्। [याम्
मधुमक्षिका स्त्री० मधुसञ्चायिका मक्षिका (मौमाछि) सरघा-
मधुमज्जन् पु० मधुरं मज्ज सारोऽस्य। आखोटकवृक्षे।
मधुमत् त्रि० मधुर्मधुररसोऽस्त्यस्य मतुप्। माधुर्य्यवति 'मधुमत् पार्थिवं रज' इति मधुसूक्तम्। नदीभेदे, योगशास्त्रप्रसिद्धे योगिनां चित्तवृत्तिभेदे, वैदिकप्रसिद्धे 'मधु वाता' इत्यादौ ऋक्त्रये, तन्त्रोक्ते देवी नायिकाभेदे च स्त्री०ङीप्।
मधुमर्कटी स्त्री० मधुजाता मर्कटी शाक०। (मिताखण्ड) मधुजाते खण्डे। [मालत्याम्। स्वार्थे कन्। तत्रैव।
मधुमल्लि(ल्ली) स्त्री० मल्ल-इन् वा ङीप् मधुप्रधाना मल्लिः(ल्ली)
मधुमूल न० मधुरं मूलम्। (मौआलु) आलुभेदे। [वा ङीप्
मधुयष्टि स्त्री०मधुरा यष्टिः काण्डम्। इक्षौ। यष्टिमधौ स्त्री०
मधुयष्टिका स्त्री० मधुरा यष्टिरिव इवार्थे कन्। यष्टिमधौ।
मधुर पु० मधु माधुर्य्यं राति रा-क, अस्त्यर्थे र वा। गुडादिरस्ये मिष्टरसे,माधुर्य्यरसवति,इक्ष्वादौ,मनोहरे, 'मधुरया मधुबोधितमाधवी'ति माघः प्रिये च त्रि०। रक्तशिग्रौ, राजाम्रे, रक्तेक्षौ,गुड़े,शालौ,जीरके च पु०। वङ्गे, सीसे च न० स्वार्थे कन्। जीरके शतपुष्पायां यष्टिमधौ, काकोल्यां, शतावर्य्यां वृहज्जीवन्त्यां, मधुकर्कटिकायां, मधूल्यां,मेदायां, पालङ्कशाके (मौरी) मिश्यायाञ्च स्त्री०। स्वार्थे कन् अत इत्त्वम्। मिश्यायाम् स्त्री०।
मधुरजम्बीर पु० कर्म०। (कमलालेबु) जम्बीरभेदे।
मधुरत्वच पु० मधुरा त्वचा यस्य। धववृक्षे।
मधुरफल पु० मधुरं फलमस्य। राजवदरे।
मधुरवल्ली स्त्री० कर्म०। मधुवीजपूरे, जम्बीरभेदे च।
मधुरस पु० मधुन इव रसो यस्य। इक्षौ,जले च। मूर्व्वायां, द्राक्षायां, दुग्धिकायां, गाम्भार्य्याञ्च स्त्री०।

मधुरस्रव स्त्री० मधुरं स्रवति स्रु-अच्। पिण्डखर्जूर्य्याम्।
मधुराम्लक पु०कर्म०। आम्रातके।
मधुलग्न पु० मधुर्मधुररसो लग्नो यत्र। रक्तशोभाञ्जने।
मधुलिका स्त्री० मधु माधुर्य्यं लिटति गाहते लिट-क इ०। राजिकायां (राइसर्षा)। [णिनि। मधुलेह्यत्यप्यत्र
मधुलिह् पु० मधु लेढि आस्वादयति लिह-क्विप्। भ्रमरे
मधुवन न० मधुदैत्याधिष्ठितं वनम्। मथुराक्षेत्रस्थे वनभेदे किष्किन्धास्थे मधुप्रचुरे वनभेदे च।
मधुवल्ली स्त्री० मधुप्रधाना वल्ली। यष्टिमधौ।
मधुवार पु० मधुनो मद्यस्य वारः क्रमः। पुनःपुनर्मद्यपानक्रमे
मधुवीज पु० मधु मधुरं वीजं यस्य। दाड़िमे।
मधुवीजपूर पु० कर्म० (लेबुभेदे) मधुकर्कटिकायाम्।
मधुव्रत पु० मधु तत्सञ्चयो व्रतं सततानुशीलनं यस्य। भ्रमरे
मधुशाख पु० मधुर्मधुरा शाखाऽस्य। (मौल) वृक्षे।
मधुशिग्रु पु० मधुः मधुरः शिग्रुः। रक्तशोभाञ्जनवृक्षे।
मधुशेष पु० न०मधुनः शेषः उच्छिष्टम्। सिक्थके (मोम)।
मधुश्रेणी स्त्री० मधुनः श्रेणीव। मूर्व्वायाम्।
मधुश्वासा स्त्री० मधुन इव श्वसित्यस्मात् श्वस-अपादाने घञ्। जीवन्तीवृक्षे। [सारथ्यादयोऽप्यत्र।
मधुष्ठील पु० मधु ष्ठीले गर्भेऽस्य। (मौल) गुडपुष्पवृक्षे। [मधु-
मधुसख पु० मधोर्वसन्तस्य सखा सहचरः अच् स०। कामदेवे
मधुसूदन पु० मधुं तन्नामासुरं सूदयति, मधु,जीवानां शुभाशुभकर्म्म, ज्ञानदानेन सूदयति वा सूद-ल्यु। श्रीकृष्णे। 'भक्तानां कर्म्मणाञ्चैव सूदनात् मधुसूदन' इति निरुक्तेः मधु माध्वीकं सूदयति भक्षयति। भ्रमरे। मधुइव सूद्यते भक्ष्यते ल्युट् ङीप्। पालङ्गीशाके।
मधुस्रव पु०मधूनि मद्यानि स्रवन्त्यस्मात् स्रु-अप्। (मौलवृक्षे)
मधुस्रवस् पु० मधु स्रवति अस्मात् स्रु-असुन्। (मौल) वृक्षे।
मधुस्वर पु० मधुर्मधुरः स्वरोऽस्य। कोकिले। मधुरस्वरवति त्रि० [क्विप्। विष्णौ।
मधुहन् पु० मधुनामासुरं कर्मफलं वा ज्ञानद्वारा हन्ति हन्
मधूक न० मह-ऊक हस्य धः। यष्टिमधौ। (मौल) वृक्षे पु०।
मधूच्छिष्ट न० मधुन उच्छिष्टमवशिष्टम्। (मोम) सिक्थके मधूच्छितमप्यत्र।
मधूपघ्न पु०न० मधुदैत्यस्योपघ्नमाश्रयः। मथुरानगरे।
मधूल पु०मधु लाति ला-क इ०। जलजगिरिजमधूकवृक्षयोः। मधुकर्कट्याम् आम्रे च स्त्री०गौरा०ङीष्। स्वार्थे कन् अत इत्त्वम् टाप्। मूर्व्वायाम्।

**मध्य** पु० मन-यक् नस्य धः। देहस्यावयवभेदे। (माजा) 'मध्येन सा वेदिविलग्नमध्ये'ति कुमारः। न्टत्यादौ-मन्दत्वशीघ्रत्वभिन्ने व्यापारभेदे, पूर्व्वापरसीमयोरन्तराले, परार्द्धसंख्यातोऽर्वाचीनायां सङ्ख्यायां, तत्संख्याते च। 'अन्त्यं मध्यं परार्द्ध'मिति लीला० ज्योतिषोक्ते ग्रहाणां गतिभेदे स्त्री० तद्वति ग्रहे पु०। न्याय्ये, अन्तर्वर्त्तिनि च त्रि०। [स्वार्थे।

**मध्यगन्ध** पु० मध्ये फलमध्ये गन्धो यस्य। आम्रवृक्षे। [शब्द-

**मध्यतस्** अव्य० मध्य+तसिल्। प्रथमापञ्चमीसप्तम्यर्थवृत्तेर्मध्य-

**मध्यदेश** पु कर्म०। 'हिमवद्विन्ध्ययोर्मध्यं यत् प्राग्विनशनादपि। प्रत्यगेव प्रयागाच्च मध्यदेशः प्रकीर्त्तित' इत्युक्ते देशभेदे

**मध्यन्दिन** न० मध्यं दिनस्य अलुक्समा०। मध्याह्ने।

**मध्यपदलोपिन्** पु० मध्यपदस्य लोपोऽस्त्यस्य इनि। व्याकरणप्रसिद्धे शाकपार्थिवादिके समासभेदे।

**मध्यम** त्रि० मध्ये भवः म। मध्यभवे। सप्तस्वरमध्ये क्रौञ्चस्वरस्थिते पञ्चमे स्वरे पु०। [र्मध्यवर्त्तित्वात्।

**मध्यमपाण्डव** पु० कर्म०। अर्जुने तस्य पूर्व्वापरयोर्द्वयोर्द्वयो

**मध्यमभृतक** पु० कर्म०। 'मध्यमस्तु कृषीवल' इत्युक्ते मध्यमे दासे कृषीवलादौ।

**मध्यमलोक** पु०कर्म्म०। पृथिव्याम् तस्याः पातालस्वर्गलोकयोर्मध्यवर्त्तित्वात् 'मध्यमलोकपाल' इति रघुः मध्यलोकोऽप्यत्र

**मध्यमसंग्रह** पु०कर्म०। 'प्रेषणं गन्धमाल्यानां धूपभूषणवाससाम्। प्रलोभनञ्चान्नपानैर्मध्यमः संग्रहोमत' इत्युक्ते मध्यमे स्त्रीसंग्रहरूपे विवादभेदे।

**मध्यमसाहस** कर्म० 'वासःपश्वन्नपानानां गृहोपकरस्य च। एतेनैव प्रकारेण मध्यमं साहसं स्मृत'मित्युक्ते परकीयवस्त्रादेर्भङ्गाक्षेपादिरूपे बलकरणककर्मरूपे साहसभेदे 'पणानां द्वे शते सार्द्धे प्रथमः साहसःस्मृतः। मध्यमः पञ्च विज्ञेय' इत्युक्ते पञ्चपणात्मके दण्डभेदे पु०।

**मध्यमा** स्त्री० मध्य+म। दृष्टरजस्कायां नार्य्याम्, तर्ज्जन्यनामयोरन्तःस्थायामङ्गुलौ, पद्मादीनां कर्णिकायाम्, हृदयोत्पन्नायां वैखर्य्यादिषु मध्ये वाणीभेदे, नायिकाभेदे च।

**मध्यमाहरण** न० वीजगणितप्रसिद्धे अव्यक्तमानज्ञापके गणनाभेदे। [अर्द्धरात्रे।

**मध्यरात्र** पु०मध्यं रात्रेः एकदेशि स० अच् समा०। निशीथे

**मध्यवर्त्तिन्** त्रि० मध्ये वर्त्तते वृत-णिनि। वादिप्रतिवादिनोरन्ययोर्वा पचप्रतिपक्षयोर्वाक्यादिविषयविमर्शपूर्व्वकं तत्त्वनिर्णायके, स्वार्थाविरोधेन परार्थसम्पादके, कार्य्यसम्पादके च मध्यस्थे।

**मध्यस्थ** पु०मध्ये तिष्ठति स्था-क। मध्यवर्त्तिनि, उदासीने च। 'माध्यस्थ्यमिष्टेऽप्यवलम्बतेऽर्थे' इति कुमारः।

**मध्या** स्त्री०स्त्रियां टाप्। तगणरपादके छन्दोभेदे नायिकाभेदे मध्यमाङ्गुलौ च।

**मध्याह्न** पु०मध्यमह्नः एक०स० टच् समा० अह्नादेशः। त्रिधा विभक्तदिनस्य द्वितीये भागे, 'प्रातःकालो मुहूर्त्तांस्त्रीन् संगवस्तावदेव तु। मध्याह्नस्त्रिमुहूर्त्तं स्या'दित्युक्ते पञ्चधाविभक्तदिनस्य तृतीये भागे च। [कन्। तत्रैव।

**मध्वालुक** पु० मधुर्मधुर आलुः। (मौ आलु) मूलभेदे। ततः

**मध्वासव** पु० मधुना पुष्परसेन कृत आसवः। (मौल) मधुद्रुमपुष्पजाते मद्ये। [अमनीत्।

**मन** पूजायां सक०गर्वे अक०भ्वा०पर०सेट्। मनति। अमानीत्-

**मन** गर्व्वे अक०चु०आ०सेट्। मानयते अमीमनत।

**मन** बोधे तना०आ०सक०सेट्। मनुते अमनिष्ट।

**मन** बोधे दि०आ०सक०अनिट्। मन्यते। अमंस्त।

**मन** धृतौ अद०चु०उ०सक०सेट्। मनयति ते अममनत् त।

**मन** पु० मन-अच्। जटामांस्याम्।

**मनःशिला** स्त्री०मनः शब्दनाम्नी शिला। (मन्छल) रक्तवर्णे उपधातुभेदे 'मनःशिलाविच्छुरिता निषेदुरि'ति कुमारः। पृ० वा ह्रस्वे पुंस्त्वमपि। 'दष्टैर्मनःशिलगुहैरविदार्य्यमाणे'ति।

**मनस्** न० मन्यतेऽनेन मन-असि। सर्व्वेन्द्रियप्रवर्त्तके अन्तरिन्द्रिये, तच्च वेदान्तमते सङ्कल्पविकल्पात्मकवृत्तिमदन्तःकरणं सुखदुःखाद्याधारः 'कामः संकल्पोविचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत् सर्व्वं मनएवे'ति श्रुतेः न्यायमते तज्ज्ञानसाधनमिति भेदः। मनःशिलायाञ्च।

**मनसा** स्त्री० मननं मनं स्यति सो-क। आस्तीकस्य मुनेर्मातरि वासुकिभगिन्याम् जरत्कारिपत्न्यां नाम्ना जरत्कारौ।

**मनसादेवी** स्त्री० मनसा दीव्यति दिवः करणस्य कर्म्मत्वात् कर्म्मोपपदत्वेन अण् ङीप् अलुक्स०। मनसाशब्दार्थे।

**मनसिज** पु० मनसि जायते जन-ड सप्तम्या वा अलुक्। कामदेवे। लुकि। मनोजोऽप्यत्र। एवं चित्तजातादयोऽप्यत्र।

**मनसिशय** पु० मनसि शेते अच् वा अलुक्। कामदेवे।

**मनस्कार** पु० कृ-घञ् मनसःकारोव्यापारभेदः चित्तस्य सुखतत्परत्वे।

**मनस्ताप** पु० मनसस्तापः अनुतापः। अनुतापे, मनःपीड़ायाञ्च

**मनस्विन्** त्रि० प्रशस्तं मनोऽस्त्यस्य विनि। प्रशस्तमनस्के। स्त्रियां ङीप्। 'मनस्विनीनां प्रतिपत्तिरीदृशी'ति कुमारः

**मनाक्** अव्य०मन-आकि। ईषदर्थे, मन्दे च 'कुतूहलाक्रान्तमना

मनागभूदि'ति नैषधम् । [वृक्षभेदे । ईषत्करे त्रि॰

मनाक्कर न॰ मनाक् करोति कृ-अच् । भल्लिकागन्धयुक्ते अगु-

मनावी स्त्री॰ मनोः पत्नी वा ङीप् औङ् च । मनोः पत्न्याम्

मनित त्रि॰ भ्वा॰ मन-क्त । ज्ञाते ।

मनीषा स्त्री॰ ईष-अङ् मनस ईषा शक॰ । बुद्धौ ।

मनीषिन् पु॰ मनीषा अस्त्यस्य इनि । पण्डिते । बुद्धियुक्ते त्रि॰

मनु स्त्री॰ मन-उ । पृक्कायाम् (पिडिङ्गशाक) मनुपत्न्याञ्च ।

प्रजापतिभेदे, धर्म्मशास्त्रकर्त्तरि स्वायम्भुवे स्मृतिभेदे च पु॰

मनुज पु॰ मनोः स्वायम्भुवात् जायते जन-ड । मनुष्ये

स्त्रियां जातौ ङीप् । [जातौ ङीप्

मनुष्य पु॰ मनोरपत्यं यत् षुक् च । मानवे जातिभेदे । स्त्रियां

मनुष्यधर्मन् पु॰ मनुष्यस्येव धर्म्मो यस्य नरवाहनत्वात् अ-

निच् समा॰ । कुवेरे । [मनःशिलायाम् ।

मनोगुप्ता स्त्री॰ मनसा मनःशब्देन तच्छब्दवाच्यत्वात् गुप्ता ।

मनोजव त्रि॰ जु-अच् मनो जवं वेगवत् गमनाय यस्मिन् ।

पितृतुल्ये । मनस इव जवो यस्य । अतिवेगवति त्रि॰।

अग्निजिह्वायां स्त्री॰ । [इङ्गितज्ञे ।

मनोजवृद्धि पु॰ मनोजस्य कामस्य वृद्धिर्यस्मात् ५ब॰। काम-

मनोज्ञ त्रि॰ मनो जानाति ज्ञापयति बोधनाय प्रत्यक्षीकरोति

अन्तर्भूतण्यर्थे ज्ञा-क । मनोहरे । मनःशिलायां,वन्ध्याक-

र्कोट्यां, काढ्यां, जीरके, मदिरायाञ्च स्त्री॰ ।

मनोभव पु॰ मनसि भवति भू-अच् । कामदेवे मनोजमनो-

भूप्रभृतयोऽप्यत्र । [प्रापकत्वात् । इच्छायाम्

मनोरथ पु॰ मनएव रथोऽत्र, मनसो रथइव वा इष्टसाध्य

मनोरम त्रि॰ मनोरमयति रम-णिच्-अच् उप॰ । मनोहरे ।

गोरोचनायां स्त्री॰ ।

मनोहत त्रि॰ मनो हतं यस्य । प्रतिहते, प्रतिबद्धे च ।

मनोहर त्रि॰ मनो हरति स्वदर्शनाय हृ-अच् । रुचिरे । कुन्द-

वृक्षे पु॰। जात्यां, स्वर्णयूथ्यां च स्त्री॰। स्वर्णे न॰। णिनि।

मनोहारीति मनोहरे ।

मनोह्वा स्त्री॰ मनःशब्देनाह्वयते ह्वे-घञर्थे क । मनःशिलायाम्

मन्ज मार्ज्जने सक॰ध्वनौ अक॰भ्वा॰पर॰सेट। मञ्जति अमञ्जीत्

मन्तु पु॰ मन-कु तुट् च । अपराधे, मनुष्ये, प्रजापतौ च ।

मन्त्र पु॰ मत्रि-अच् । गुप्तभाषणे, रहसि कर्त्तव्यावधारणार्थकृतौ

देवादीनां साधनार्थं तन्त्राद्युक्ते शब्दभेदे, वेदविभागभेदे च

मन्त्रजिह्व पु॰ मन्त्रएव जिह्वा आस्वादनसाधनं यस्य । अग्नौ,

मन्त्रेण दत्तहविरास्वादकत्वात्तस्य तथात्वम् ।

मन्त्रदातृ पु॰ दा-तृच् ६त॰। गुरौ ।

मन्त्रिन् पु॰ मन्त्रयते णिनि । धीसचिवे येन सह रहसि

कर्त्तव्यमवसीयते तस्मिन् अमात्ये ।

मन्थ क्लेशे अक॰ विलोड़ने सक॰भ्वा॰पर॰सेट् । मन्थति अमन्थीत्

मन्थ विलोडे क्र्या॰पर॰द्विक॰सेट् । मथ्नाति अमन्थीत् ।

मन्थ पु॰ मन्थ-करणे घञ् । मन्थनदण्डे । 'सक्तुभिः सर्पिषा-

भ्यक्तैः शीतवारिपरिप्लुतैः । नात्यच्छो नातिसान्द्रश्च मन्थ

इत्यभिधीयते' इत्युक्ते पेयभेदे, सूर्य्ये, अर्कवृक्षे, नेत्रमले, कि-

रणे च । भावे घञ् । आलोडनादौ ।

मन्थज न॰ मन्थात् दधिमन्थनात् जायते जन-ड । नवनीते ।

मन्थन पु॰ मथ्यतेऽनेन करणे ल्युट् । मन्थानदण्डे ।

मन्थर न॰ मन्थ-करच् । कुसुम्भराम् । कोषे, फले, बाधे मन्था-

नदण्डे च पु॰ वक्रे, नीचे, जड़े, मन्दे च त्रि॰ । 'मदयमन्देभ

स्खलनाखमन्थर' इति नै॰ । कैकेय्याः दास्यां स्त्री॰ ।

मन्थशैल पु॰६त॰ । समुद्रमन्थनाय मन्थनदण्डरूपेण कल्पिते

मन्दरपर्व्वते । [न्दाख

मन्थान पु॰ मन्थ-आनच् । मन्थनदण्डे, आरग्वधवृक्षे च (सो-

मन्द त्रि॰ मदि-अच् । मूर्खे मृदौ, अभाग्ये, रोगिणि, अल्पे,

स्वतन्त्रे, खले च । शनिग्रहे, हस्तिभेदे, यमे, प्रलये च पु॰।

ज्योतिषोक्ते रविसंक्रान्तिभेदे स्त्री॰ ।

मन्दग त्रि॰ मन्दं गच्छति गम-ड । मृदुगामिनि शनि, शानि-

पुरुष, वृष, हंस, गज, वरस्त्रिय इत्येते स्वभावान्मन्दगतयः ।

णिनि मन्दगामीत्यप्यत्र त्रि॰ । स्त्रियां ङीप् ।

मन्दट पु॰ मन्दं टीकते टीक-ड । पारिभद्रवृक्षे । (पालदेमादार)

मन्दता स्त्री॰ मन्दस्य भावः तल् । आलस्ये, जाड्ये, मन्दभावे च

'उच्चैरस्यति मन्दतामरसता'मिति चन्द्रालोकः ।

मन्दर पु॰ मदि-अरन् । समुद्रमन्थाने पर्व्वतभेदे, मन्दारवृक्षे,

स्वर्गे, हारभेदे, दर्पणे च । बहुले, मन्दे च त्रि॰ ।

मन्दाकिनी स्त्री॰ मन्दमकति अक-णिनि । स्वर्गगङ्गायां

'स्वर्गे मन्दाकिनी तथे'ति पुराणम् ।

मन्दाक्रान्ता स्त्री॰ सप्तदशाक्षरपादके छन्दोभेदे ।

मन्दाक्ष न॰ मन्दं सङ्कुचितमक्षि यस्माद् षच् समा॰। लज्जायाम्

मन्दाग्नि पु॰ मन्दः पचने अल्पशक्तिकः अग्निः अनलः, स

यस्मात् । देहस्थे अपाचनशक्तिकेऽनले तद्धेतौ रोगभेदे च ।

मन्दार पु॰ मदि-आरक् । स्वर्गस्थे देववृक्षभेदे, पारिभद्रवृक्षे च

मन्दिर न॰ मन्द्यतेऽत्र मदि-किरच् । गृहे, पुरे च । तस्य दिविङ्

त्वमित्येके । समुद्रे जानुपश्चाद्भागे च पु॰ । (माडुर)

मन्दुरा स्त्री॰ मदि-उरच् । अश्वशालायाम्, शयनीयकटे च

मन्दोदरी स्त्री॰ मयदानवकन्यायां रावणमहिष्याम् ।

मन्दोष्ण न० मन्दमीषदुष्णम् । ईषदुष्णस्पर्शे । तद्वति त्रि० ।
मन्द्र पु० मदि-रक् । वाद्यभेदे, गम्भीरध्वनौ च । अर्श आद्यच् तद्वति त्रि० । [कामचिन्तायां, कपित्थवृक्षे च ।
मन्मथ पु० मननं मत् मन-क्विप् मथति अच् ६त० । कन्दर्पे,
मन्मथालय पु० ६त० । आम्रवृक्षे स्त्रीचिह्नभेदे च ।
मन्या स्त्री० सेट्-मन-क्यप् । ग्रीवायाः पश्चाद्भागस्थायां शिरायाम्
मन्यु पु० मन-युच् । शोके, दैन्ये, क्रतौ क्रोधे, अहङ्कारे च
मन्वन्तर न० मनूनामन्तरमवकाशस्तदुपलक्षितकालो वा । स्वायम्भुवादिमनूनामधिकारे तदुपलक्षिते काले च सत्य-युगमितवर्षाधिका एकसप्ततिचतुर्युगमिता (३११४४८०००) एतन्मितवर्षास्तदवकाश इति वृद्धाः ।
मभ्र गतौ भ्वा०पर०सक०सेट् । मभ्रति अमभ्रीत् ।
मम अव्य०मा-डम । षष्ठ्यर्थवृत्तेः अस्मच्छब्दार्थे तेन ममत्वमिति
ममता स्त्री० मम भावः तल् । स्नेहे मदकारे मत्सम्बन्धे च । एवं ममत्वमप्यत्र 'तथापि ममतावर्त्ते' इति 'ममत्वं मम-राजस्ये'ति च चण्डी ।
मय गतौ भ्वा०आ०सक०सेट् । मयते अमयिष्ट ।
मय पु० मय-अच् । उष्ट्रे अश्वतरे । दानवभेदे च ।
मयष्टक पु० मि+अच् मयं प्रक्षेपं स्तकते प्रतिबध्नाति स्तक-अच् पृ० षत्वम् । वनमुद्गे ।
मयु पु० मि-उ । किन्नरे, मृगे च ।
मयुष्टक पु० मिनोति मि-उ मयुः स्था कुण् स्थकः कर्म० । पृ० षत्वम् वनमुद्गे पृ० । मयुष्ठकोऽप्यत्र । [शोभायाञ्च ।
मयूख पु० माङ्-ऊख मयादेशः । त्विषि, किरणे, शिखायां
मयूर पु० मी-ऊरन् । स्वनामख्याते खगभेदे । स्वार्थे कन् । तत्थाञ्जने (तुते) न० । अपामार्गे, मयूरशिखावृक्षे च पु०
मयूरग्रीवक न० मयूरग्रीवेव वुन् । तुत्थे (तुते) ।
मयूरजङ्घ पु० मयूरस्य जङ्घेव मूलमस्य । श्योनाकवृक्षे ।
मयूरतुत्थ न० मयूरइव तद्वर्णं तुत्थम् । तुत्थे (तुते) ।
मयूरविदला स्त्री० मयूरैर्विदल्यते मयूर इव विशिष्टदल-मस्या वा । अम्बष्ठायाम् (युइ) (आमरुल) ।
मयूरशिखा स्त्री० मयूरस्येव शिखाऽस्याः । स्वनामख्याते क्षुपभेदे मयूरचूडादयोऽप्यत्र ।
मयूरिका स्त्री० मयूरो विद्यतेऽस्याः तच्चन्द्रकतुल्यदलत्वात् ठन् । अम्बष्ठायाम् (युइ) (आमरुल) ।
मरक पु० मृ-वुन् । दैविकभौतिकोपद्रवजन्ये प्राणिनामकाल-मरणे(मड़क) मारिभये । [मणिभेदे (पान्ना) ।
मरकत न० मरकं मारिभयं तरत्यनेन तॄ-ड । हरिद्वर्णे
मरकतपत्त्री स्त्री० मरकतमिव हरिद्वर्णं पत्त्रमस्याः ङीप् । पाठायाम् । (निसुइ क्षुप) ।
मरण न० म्रियतेऽनेन मृ-करणे ल्युट् । वत्सनाभाख्ये विषे । भावे ल्युट् । देहात्मनोर्विच्छेदरूपे, प्राणवायोरुत्क्रमणरूपे वा व्यापारे । [पृ० सुम् । मकरन्दे ।
मरन्द पु० मरं मरणं द्यति भ्रमराणां जीवनहेतुत्वात् दो-क
मराकाली स्त्री० मरो मरणकालिकं दुःखमिवाकति यात्यनेन मराको वृश्चिकः स इवालति पर्याप्नोति दुःखदानाय अल-अच् गौ० ङीष् । वृश्चिकाली (बिछाति) ।
मराल पु० मृ-आलच् । राजहंसे, 'तत्रामरालयमरालमरा-लकेशी'ति नैषधम् । कज्जले, कारण्डवे, अश्वे, मेघे, खले, दाडिमीवने च । चिक्कणे त्रि० ।
मरि(री)च पु० मृ-इच पृ० वा दीर्घः । स्वनामख्याते वृक्षे
मरि(री)चपत्त्रक पु० मरिचस्येव पत्त्रमस्य कप् । सरलवृक्षे ।
मरीचि पु० मृ-ईचि । सप्तर्षिमध्ये ब्रह्मणो मानसे ज्येष्ठे पुत्रे मुनिभेदे, कृपणे च । किरणे पु० स्त्री० ।
मरीचिका स्त्री० मरीचौ सूर्यकिरणे कमिव जलमिव यत्र भ्रान्तौ । सूर्यकिरणे जलभ्रान्तौ, मृगतृष्णायाम् । [देशे च ।
मरु पु० मृ-उ । पर्वते, निर्जलदेशे च कुरुवकवृक्षे (माडयार)
मरुज पु० मरुदेशे जायते जन-ड । नखीनामगन्धद्रव्ये, निर्जल-जाते त्रि० । मृगकर्कोट्याम् स्त्री० ।
मरुत् पु० मृ-उति । वायौ, देवे च । स्वार्थे प्रज्ञाद्यण् । मारुतोऽप्यत्र । मरुवके, ग्रन्थिपर्णे च न० । पृक्कायां स्त्री० । पृ० तुक्ः । मरुतोऽपि वायौ ।
मरुत्कर पु० मरुतमपानवायुं करोति कृ-अच् । राजमाषे
मरुत्त पु० चन्द्रवंश्ये नृपभेदे । ततः संज्ञायां कन् । मरुवके ।
मरुत्पथ पु० ६त० । आकाशे । मरुद्वर्त्मादयोऽप्यत्र ।
मरुत्पाल पु० । मरुतो देवान् पालयति पाल-अण् । इन्द्रे ।
मरुत्वत् पु० मरुत् पाल्यत्वेनास्त्यस्य न पदत्वम् मस्य वः । इन्द्रे
मरुत्सख पु० मरुतो वायोः सखा-टच् । इन्द्रे, वह्नौ, चित्रकवृक्षे च
मरुदान्दोल न० मरुतमान्दोलयत्यनेन करणे घञ् । व्यजने ।
मरुदिष्ट पु० मरुतां देवानामिष्टः । गुग्गुलौ ।
मरुद्भवा स्त्री० मरुतो वायो र्भवति वर्द्धते भू-अच् । (तालमूली) क्षुपे (खिराइ) । [खदिरे ।
मरुद्रुम पु० मरोर्निर्जलदेशस्य द्रुमत्वजातत्वात् । विट्-
मरुद्वाह पु० मरुत् वाह इव यस्य । धूमे, वह्नौ च ।
मरुन्माला स्त्री० मरुतो मालेव । (पिड़िङ्शाक) पृक्कायाम् ।
मरुभू पु० ६त० मरुभूमिरप्यत्र (माड़वार) देशभेदे, कर्म० । निर्जलभुवि

**मरुभूरुह** पु० मरुभुवि निर्जलभूमौ रोहति रुह-क । करवीरे

**मरुव** पु० मरुं निर्जलदेशं वाति कारणत्वेन वा-क । (माल-दाना) (मरुआ) वृक्षभेदे । स्वार्थे कन् । तत्र, वृक्षभेदे, (मयना) स्वल्पपत्रतुलस्याम्, जम्बीरभेदे, पुष्पप्रधाने वृक्षभेदे, (मरुयाफुल) व्याघ्रे, राहौ, भयानके च ।

**मरुसम्भवा** स्त्री० मरौ सम्भवति अच् । चुद्रदुरालभायाम् मरुस्यादयोप्यत्र । [चुद्रखदिरे च ।

**मरूद्भवा** स्त्री० मरौ उद्भवति उद्+भू-अच् । कार्पास्यां,

**मर्क** गतौ सौ० पर०सक० सेट् । मर्कति अमर्कीत् ।

**मर्कट** पु० मर्क-अटन् । वानरे । उर्णनाभे (माकड़सा) स्थावर विषभेदे (हाड़गिला) पक्षिभेदे च स्वार्थे कन् । तत्रैव ।

**मर्कटतिन्दुक** पु० मर्कटप्रियस्तिन्दुकः शाक० । कुपीलौ ।

**मर्कटपिप्पली** स्त्री० मर्कटप्रिया पिप्पली शाक० । अपामार्गे

**मर्कटप्रिय** पु० ६त० । चीरवृक्षे (खिरद) ।

**मर्कटवासस्** पु० ६त० । (माकड़साजाल) लूतातन्तौ ।

**मर्कटशीर्ष** न० मर्कटस्य वानरस्य शीर्षमिव । हिङ्गुले । [त्रि०

**मर्कटास्य** मर्कटस्य वानरस्यास्यमिव रक्तत्वात् । ताम्रे तद्वति

**मर्कटी** स्त्री०मर्कटोस्त्यस्याः स्निग्धत्वेन अच् गौ०ङीष् । अपा-मार्गे, अजमोदायाम्, करञ्जभेदे (माकड़ाकरमचा) वानर-योषिति च । [स्नानाय चक्रभेदे ।

**मर्कटीजाल** न० छन्दोग्रन्थोक्ते प्रस्तावे लघुगुरुस्थानविवेक-

**मर्कर** पु० मर्क-अरच् । भृङ्गराजे (केशुरिया) भाण्डे सुर-ङ्गायां, वन्ध्यायां-स्त्रियाञ्च स्त्री०टाप् ।

**मर्च** ग्रहणे चु०उभ०सक०सेट् । मर्चयति-ते अममर्चत्-त ।

**मर्त्त** पु०मृ-तन् । मनुष्ये भूलोके च। तत्र भवः यत् । मर्त्त्यः । मनुष्ये ।

**मर्द्दन** न० मृद-ल्युट् । गात्रपादादिसंवाहने, चूर्णने च ।

**मर्द्दल** पु०मृद-घञ् मर्द्दं लाति ला-क । वाद्यभेदे (मादल) ।

**मर्द्दित** त्रि० चु० मृद-क्त । चूर्णिते, मथिते च ।

**मर्ब** गतौ भ्वा०पर सक०सेट् । मर्बति अमर्बीत् ।

**मर्म्मज्ञ** पु० मर्म जानाति ज्ञा-क । तत्त्वज्ञे । मर्म्मविदादयोप्यत्र

**मर्म्मन्** न० मृ-मनिन् । जीवनस्थाने सन्धिस्थाने तात्पर्य्ये च 'अपि धर्म्मागममर्म्मपारगैरि'ति नैषधम् ।

**मर्म्मर** पु० मृ-अरन्मुट् च । वस्त्रपर्णानां शब्दे (मड़मड़) इत्यव्यक्तशब्दे । पीतदारुणि, हरिद्रायाञ्च स्त्री०गौ०ङीष् ।

**मर्म्मस्पृश्** त्रि० मर्म्म प्राणस्थानं स्पृशति स्पृश-क्विन् । अरु-न्तुदे मर्म्मपीडके । [दीष । मर्म्मपीडनो ।

**मर्म्माविध्** त्रि० मर्म्म सन्धिस्थानं विध्यति विध-क्विप् पूर्व

**मर्य्या** अव्य० म्रियते-ऽवधिष्यतेऽत्र मृ-यत् । सीमायाम् स्त्री-त्वमपि ।कर्त्तरि यत् । मनुष्ये पु०। 'पेशो मर्य्या अपशसे' इति वेदमन्त्रः मर्य्यामनुष्या इति सायनवेदभाष्यम् ।

**मर्य्यादा** स्त्री०मर्य्यायां सीमायां दीयते दा-अच् पर्य्यादीयते वा परि+आ-दा-अङ् ष्ट० पस्य मः । न्याय्यपथस्थितौ, सीमायाम् कूले च ।

**मर्व** पूर्त्तौ भ्वा०पर०सक०सेट् । मर्वति अमर्वीत् ।

**मल** धृतौ भ्वा०आ०अक०सेट् । मलते अमलिष्ट ।

**मल** पु० मृज्यते शोध्यते मृज-कल-टिलोपः । पापे, पुरीषे, लौहादीनां किट्टे कलङ्के, मण्डूरादौ, देहजाते, स्वेदश्लेष्मादौ, कर्पूरे, कृपणे, वातपित्तकफेषु च ।

**मलघ्न** पु० मलं विशं हन्ति रेचयति हन-क । शाल्मलीकन्दे क्विप् । मलहाप्यत्र । नागदमन्यां स्त्री० ङीप् ।

**मलदूषित** त्रि० ३त० । मलिने । [तत्फलस्य रेचकत्वात् ।

**मलद्राविन्** पु०मलं द्रावयति रेचयति द्रु-णिच्-अण् । जयपाले ।

**मलपू** स्त्री०मलं मलस्थानं पुनाति पू-क्विप् । काकोडुम्बरिकायाम्

**मलभेदिनी** स्त्री० मलं भेदयति रेचयति भिद्-णिच् । कटुकायाम् । (कट्की) ।

**मलमास** पु० मलो दुष्टोमासः । 'अमावस्याद्वयं यत्र रवि-संक्रान्तिवर्ज्जितम् मलमासः स विज्ञेय' इत्युक्ते रविसं-क्रान्तिशून्ये शुक्लप्रतिपदादिदर्शान्तरूपे चान्द्रे मासे ।

**मलय** पु० मल-कयन् । दक्षिणस्थे पर्व्वतभेदे । यत्र चन्दनजन्म तत्पर्व्वतान्तिकस्थे देशभेदे, उपवने, नन्दनवने नवसु द्वीपेषु मध्ये द्वीपभेदे, ऋषभदेवस्य पुत्रभेदे च ।

**मलयज** न० मलये पर्व्वते जायते जन-ड । चन्दने । मलय-देशजाते वायौ पु० । तद्देशजाते त्रि० । [(तेओडि) ।

**मलया** स्त्री०मलयो देशोस्त्यस्याः कारणत्वेन अच् । त्रिवृतायां

**मलविनाशिनी** स्त्री० मलं तद्दोषं विनाशयति वि+नश-णिच्-णिनि । शङ्खपुष्प्याम् ।

**मलारि** पु० मलस्य कलङ्ककिट्टादेररिः । सर्ज्जक्षारद्रव्ये ।

**मलिन** त्रि० मल+अस्त्यर्थे इनच् । मलयुक्ते, दूषिते, कृष्णे च इनि । मलीत्यप्यत्र, दोषे, टङ्कणे, (सोहागा) ।

**मलिनमुख** पु० मलिनं मुखं यस्य । वह्नौ, तस्यादौ धूमाय-मानत्वेन कृष्णत्वात् वानरे च । क्रूरे, खले च त्रि० ।

**मलिम्लुच** पु० मली वैदिककर्मानर्हत्वेन दुष्टः सन् म्लोचति गच्छति म्लुच-क । मलमासे, वायौ, अग्नौ, चौरे च ।

**मलीमस** त्रि० मल-ईमस च् । मलिने, लौहे, पुष्पकासीसे च

**मल्ल** धृतौ भ्वा०आ०अक०सेट् । मल्लते अमल्लिष्ट ।

मल्ल पु० मल्ल-अच् । बाहुयुद्धकारके नियोद्धरि, पात्रे, देशभेदे कपोले च ।

मल्लक पु०मल्लयते धियतेऽत्र । दीपाधारे पात्रे, नारिकेलफल-जाते पात्रे च (माला) स्वनामपुष्पे स्त्री० टाप् अत इत्त्वम् ।

मल्लज न० मल्ले देशे जायते जन-ड । मरिचे । [देशभेदे ।

मल्लभू स्त्री० मल्लक्रीडनस्य बाहुयुद्धस्य योग्या भूःस्थानम्

मल्लयुद्ध ६त० । बाहुयुद्धे ।

मल्लार पु० मल्ल इव ऋच्छति ऋ-अच् । रागभेदे रागिणी भेदे मल्लिकायाञ्च स्त्री० ङीप् ।

मल्लि(ल्ली) स्त्री०मल्ल-इन् वा-ङीप् मल्लिकायाम् संज्ञायां कन् । कृष्णवर्णदेहे आलोहितचञ्चुचरणे हंसभेदे, मल्लिकाक्षोप्यत्र ।

मल्लिकापुष्प पु०मल्लिकाया इव पुष्पमस्य । कुटजवृक्षे कदम्ब वृक्षे च ६त०। मल्लिकाकुसुमे ।

मल्लिपत्त्र न० मल्लिरिव पत्त्रमस्य । छत्राके ।

मव बन्धे भ्वा० पर०सक०सेट् । मवति अमवीत् अमावीत् ।

मव्य बन्धे भ्वा०पर०सक०सेट् । मव्यति अमव्यीत् ।

मश ध्वनौ अक० कोपे सक० भ्वा० पर० सेट् । मशति अम-शीत्-अमाशीत् ।

मशक पु० मश-वुन् । कीटभेदे (मशा) ।

मशकिन् पु० मशकोऽस्यस्य इनि । उडुम्बरवृक्षे ।

मशि(शी) स्त्री० मश(ष) इन् वा ङीप् । (कालो) पत्रलेखन-द्रव्ये, नीलशेफालिकावृक्षे च ।

मष वधे भ्वा०पर०सक०सेट् । मषति अमषीत् अमाषीत् ।

मस परिणामे परिमाणे च दि०पर०अक०सेट् । मस्यति अमसत् अमसीत् अमासीत् । पुषादिरयं तेन अम-सदित्येवेति पाणिनीयाः ।

मसन न० मस-ल्युट् । सोमराजीवृक्षे ।

मसरा स्त्री० मस-अरच् । मसूरे ।

मसिका स्त्री० मसीव इवार्थे कन् । नीलशेफालिकायाम् ।

मसिजल न० मसिमिश्रितं जलम् । (कालो) लेखनद्रव्ये ।

मसिधान न०मसिर्धीयतेऽत्राधारे ल्युट् । मस्याधारे (दोयात) स्त्रीत्वमपि तत्र ङीप् ।

मसिपण्य पु० मसिलक्षितलिखितमक्षरमेव पण्यं विक्रेयं यस्य । लेखनोपजीविनि । [यस्याः । लेखन्याम् ।

मसिप्रसू स्त्री०मस्याः प्रसूरिव । मस्याधारे । मसिः प्रसूरिव

मसीना स्त्री० मस-ईनच् । अतस्याम् (तिसि) ।

मसु(सू)र पु० मस-उरच् ऊरच् वा । कलायभेदे (मसूरी) वेश्यायां, व्रीहिभेदे च स्त्री०टाप् ।

मसूरद्विदला स्त्री० मसूरस्येव द्विदलं यस्याः । कृष्णत्रिवृति (कालतेओडी) ।

मसूरिका स्त्री०मसूरेव इवार्थे कन् । वसन्तरोगे, कुट्टिन्याञ्च ।

मसूरी स्त्री० मस-ऊरच् गौ०ङीष् । वसन्तरोगे, त्रिवृति, रक्त-त्रिवृति च । [च । अतस्यां स्त्री० ।

मसृण त्रि० मस-ऋण, सम्+ऋण-क पृ०वा । स्निग्धे, अकर्कशे

मस्क गतौ भ्वा०पर०अक० सेट् । मस्कति अमस्किष्ट ।

मस्कर पु०मस्क-अरच् । वंशे, रन्ध्रयुक्तवंशे च । भावे अरच् । गतौ, ज्ञाने च ।

मस्करिन् पु०मस्करो ज्ञानं गतिर्वास्त्यस्य इनि, मा कर्त्तुं कर्म-निषेद्धुं शीलमस्य मा+कृ-इनि मस्करमस्करिणाविति नि० । परिव्राजके विधानेन स्वकर्मपरित्याजके भिक्षौ । 'धारयन् मस्करिव्रतमिति भट्टिः चन्द्रे च ।

मस्ज स्नाने तु०पर०अक०अनिट् । मज्जति अमाङ्क्षीत् । क्त मग्नः । अथु मज्जथुः ।

मस्त(क) न०मस-क्त । मस्तके ।उक्ते त्रि०। संज्ञायां कन् शिरसि

मस्तकस्नेह पु० ६त० । शिरःस्थितमज्जायाम् मस्तिष्के ।

मस्तदारु न० मस्यति परिणमते मस्तरुद्धं कर्म० । देवदारुणि

मस्तिष्क न० मस-क्तिन् मस्तिं परिणतिभेदं मुष्कति मुष्क गतौ अच् पृ०। मस्तकस्थे स्नेहाकारे पदार्थे (मगज)'मांसमस्तिष्क पङ्क प्रग्भारे' इति प्रबोधचन्द्रोदयम् । [ग्रीवायाम् ।

मस्तमूलक न० मस्तस्य मूलमिव इवार्थे कन् । शिरोधरायाम्

मह पूजायां भ्वा०पर०सक०सेट् । महति अमहीत् ।

मह दीप्तौ चु०उ०अक०सेट् इदित् । मंहयति-ते अममंहत्-त

मह वृद्धौ भ्वा०आ०अक०सेट् इदित् । मंहते अमंहिष्ट ।

मह पूजने अद०चु०उभ०सक०सेट् । महयति-ते अममहत्-त

मह पु० मह-घञर्थे क । उत्सवे, सततानन्दजनकव्यापारे, ते-जसि यज्ञे, महिषे च ।

महत् त्रि० मह-अति । विपुले, वृद्धे च स्त्रियां महती । राज्ये न० । साङ्ख्योक्ते महत्तत्त्वे पु० 'प्रकृतेर्महानिति' श्रुतिः ।

महती स्त्री० मह-अति गौ०ङीष् । वीणाभेदे नारदवीणा-याम् । 'अवेक्षमाणं महतीं मुहुर्मुहु'रिति माघः । वृह-त्यां, वार्त्ताक्यां, विपुलायां स्त्रियाञ्च ।

महत्तत्त्व न० कर्म० । सांख्योक्तप्रकृत्यादिचतुर्विंशतितत्त्वमध्ये प्रकृतिकार्ये अहङ्कारादिकारणे निश्चयात्मकवृत्तिविशिष्टे तत्त्वभेदे ।

महर् अव्य० मह-अर । ऊर्द्धस्थे लोकभेदे ।

महर्लोक पु० कर्म० । भूरादिषु ऊर्द्धस्थे सप्तलोकान्तर्गते चतुर्थे

लोके तत्परिमाणादिकं वृहदभिधाने दर्शयिष्यते ।

**महर्षि** पु० कर्म्म० । परमर्षिशब्दार्थे वेदव्यासादौ ।

**महस्** न० मह-असुन् । तेजसि, यज्ञे, उत्सवे च ।

**महा** स्त्री० मह-अच् । (गोरक्षचाकलिया) गोपवल्ल्याम् ।

**महाकण्टकिनी** स्त्री० महत् कण्टकमस्त्यस्य इनि ङीप् । (फणिमनसा) वृक्षभेदे ।

**महाकन्द** पु० कर्म० । लशुने, राजपलाण्डौ, मूलके च ।

**महाकपित्थ** पु० कर्म्म० । बिल्ववृक्षे ।

**महाकरञ्ज** पु० कर्म० । करञ्जभेदे (कांटाकरमचा) ।

**महाकर्णिकार** पु० कर्म० । आरग्वधे (सोंदाल ।

**महाकाय** पु० बहु० । शिवानुचरभेदे नन्दिनि, हस्तिनि च । विपुलदेहवति त्रि० । कर्म० स्थूलदेहे पु० ।

**महाकार्त्तिकी** स्त्री० कार्त्तिकीमधिकृत्य 'प्राजापत्यं यदा ऋक्षं तयैतस्यां नराधिप । सा महाकार्त्तिकी प्रोक्ते'त्युक्तायां रोहिणीनक्षत्रयुक्तायां कार्त्तिकपौर्णमास्याम् ।

**महाकाल** पु० कर्म० । अनवच्छिन्ने काले, शिवे च 'महाकालेन च समनि'तिकालिकाध्यानम् (माकाल) लताभेदे, भैरवभेदे च 'महाकालं यजेद्देव्या दक्षिणे धूम्रवर्णक'मिति तन्त्रम् ।

**महाकाव्य** न० कवेः कर्म काव्यं कर्म० । सर्गबन्धरूपे अष्टाधिकसर्गके ग्रन्थभेदे तल्लक्षणं साहित्यदर्पणे ६ प० ।

**महाकुम्भी** स्त्री० महती कुम्भीव (पाना) कट्फले ।

**महाकुल** न० कर्म० । 'दशपुरुषविख्यातं श्रोत्रियाणां महाकुल'मिति मनुनोक्ते दशपुरुषावधिवेदाध्यायिवंशे ।

**महाकुलीन** त्रि० महाकुले भवः खञ् । महाकुलोद्भवे ।

**महाकोशफला** स्त्री० कर्म्म० । देवदालीलतायाम् ।

**महाकोषातकी** स्त्री० कर्म० । हस्तिघोषायाम् ।

**महागन्ध** न० महान् गन्धोऽस्य । हरिचन्दने, बोले च । जलवेतसवृक्षे पु० । नागबलायां, कर्णिकायां, कूटजे च स्त्री० ।

**महागुरु** पु० कर्म० । 'त्रयः पुरुषस्यातिगुरवो भवन्ति पिता माता चाचार्य्यश्चे'ति स्मृत्युक्ते पुरुषस्य पित्रादौ 'पतिरेको गुरुः स्त्रीणा'मित्युक्ते दत्तकन्याया भर्त्तरि, अदत्तकन्यायाः पितरि, मातरि च । महागुरुनिपाते च 'काम्यं किञ्चिन्नाचरेदि'ति स्मृतिः ।

**महागुल्मा** स्त्री० महान् गुल्मोऽस्याः । सोमवल्ल्याम् ।

**महागुहा** स्त्री० महती गुहेव मूलमस्याः । पृश्निपर्ण्याम् ।

**महाग्रीव** पु० महती ग्रीवास्य । उष्ट्रे । दीर्घग्रीवायुक्ते त्रि० ।

**महाघोषा** स्त्री० घुष्यते कर्म्मणि घञ् कर्म० । कर्कटशृङ्ग्याम् । (काकड़ाशिङ्गे) । कुन्दुरुक्याञ्च । महान् घोषोऽस्य । विपुलशब्दवति त्रि० । [विपुलावयववति त्रि० । कर्म० । विपुलाङ्गे न०

**महाङ्ग** पु० महदङ्गमस्य । उष्ट्रे । गोक्षुरके रक्तचित्रके च ।

**महाच्छद** पु० महान् छदोऽस्य । देवदारुवृक्षे । [त्रि०

**महाच्छाय** पु० महती छाया यस्य । वटवृक्षे । विपुलच्छायायुक्ते

**महाच्छिद्रा** स्त्री० महत् छिद्रमस्याः । महामेदायाम् ।

**महाजटा** स्त्री० महती जटा यस्याः । रुद्रजटावृक्षे । विपुलजटावति त्रि० । कर्म० । वृहत्यां, जटायाम् स्त्री० ।

**महाजन** पु० कर्म्म० । वेदवाक्येषु श्रद्धावति जने । 'महाजनो येन गतो स पन्था' इति भारतम् ।

**महाजम्बू** स्त्री० कर्म० । राजजम्ब्वाम् ।

**महाजाली** स्त्री० कर्म० । पीतवर्णघोषायाम् ।

**महाज्यैष्ठी** स्त्री० 'ऐन्द्रे गुरुः शशी चैव प्राजापत्ये रविस्तथा । पूर्णिमा रविवारेण महाज्यैष्ठी प्रकीर्त्तिते'त्याद्युक्तलक्षणायां ज्यैष्ठपौर्णमास्याम् । 'महाज्यैष्ठ्यां तु यः पश्येत् पुरुषः पुरुषोत्तमम्' इति पुराणम् ।

**महाज्योतिष्मती** स्त्री० (वड़मालकाङ्गनी) लताभेदे । [त्रि०

**महाढ्य** पु० महेन उत्सवेनाढ्यः । कदम्बे कर्म्म० । महाधनवति

**महातरु** पु० कर्म्म० । स्नुहीवृक्षे विपुलवृक्षे च ।

**महातल** न० कर्म० । अधःस्थेषु पातालेषु मध्ये पञ्चमे पाताले

**महातारा** स्त्री० कर्म० । तन्त्रोक्ते तारिणीभेदे, जिनदेव्याञ्च

**महाताली** स्त्री० कर्म० । विपुलतालीभेदे राजताल्याम् ।

**महातिक्त** पु० कर्म्म० । निम्बवृक्षे । अतिशयतिक्तरसवति त्रि० । यवतिक्तायां स्त्री० ।

**महातीक्ष्णा** स्त्री० कर्म० । भल्लातकवृक्षे (भेला) अतितीव्रे त्रि०

**महातेजस्** पु० महत् तेजोऽस्य । पारदे । अतितेजस्विनि त्रि० कार्त्तिकेये वह्नौ च पु० ।

**महात्मन्** त्रि० महान् आत्मा स्वभाव आशयो यस्य । महाशये

**महादान** न० कर्म० । विनायकादिपूजापाङ्गे तुलापुरुषादि षोड़शपदार्थदाने 'अथातः संप्रवक्ष्यामि महादानस्य लक्षण'मित्युपक्रम्य 'आद्यन्तु सर्व्वदानानां तुलापुरुषसंज्ञक'मित्यादिना षोड़शदानान्यभिधाय 'विनायकादिग्रहलोकपालवसुवटकादित्यमरुद्गणानाम् । ब्रह्माच्युतेशार्कवनस्पतीनां स्वमन्त्रतो होमचतुष्टयं स्यात् । जप्यानि सूक्तानि तथैव चैषामनुक्रमेणापि यथास्वरूप'मित्युक्तं मात्स्ये । विस्तरस्तु मत्कृततुलादानादिपद्धतौ ज्ञेयः ।

**महादारु** न० कर्म्म० देवदारुणि ।

**महादेव** पु० कर्म० । 'ब्रह्मादीनां सुराणाञ्च मुनीनां ब्रह्मवादिनाम् तेषां महत्त्वात् देवोऽयं महादेवः प्रकीर्त्तित' इति

इत्युक्तेः 'महती पूजिता विश्वे मूलप्रकृतिरीश्वरी तस्याः देवः पूजितश्च महादेवस्ततः स्मृत' इत्युक्ते च शिवे। [इहद्वृत्ते च

**महाद्रुम** पु० कर्म०। अश्वत्थवृक्षे। तस्य विष्णुरूपत्वात् महत्त्वम्

**महाधन** न० महत् मूल्यरूपं धनमस्य। बहुमूल्ये। सुवर्णे, सिह्लके, मनोज्ञवस्त्रे च। कृषौ पु०। अतिधनवति त्रि०।

**महाधातु** पु० कर्म०। स्वर्णे।

**महानदी** स्त्री०। ओड्रदेशस्थे नदीभेदे, समुद्रगामिन्यां नद्याञ्च

**महानन्द** पु० महान् अतिवृहत् आनन्दो यत्र। मोक्षे कर्म० अतिशयानन्दे पु० 'माघमासस्य या शुक्ला नवमी लोकपूजिता। महानन्देति सा प्रोक्ते'त्युक्तायां माघशुक्लनवम्यां सुरायां नदीभेदे च स्त्री०।

**महानन्दि** पु० कलौ नवात्मकस्य महापद्मनन्दपभेदस्य पितरि

**महानवमी** स्त्री० कर्म०। आश्विनशुक्लमधिकृत्य 'ततोऽह नवमी यस्मात् सा महानवमी स्मृते'त्युक्तायाम् आश्विनशुक्लनवम्याम्

**महानस** न०महदनः संज्ञायाम् अच्। पाकस्थाने। [सा०द०

**महानाटक** न० दृश्यकाव्यनाटकभेदे 'एतदेव यदा सर्वैस्त्वादि

**महानाद** पु०महा+नादोऽस्य। गजे, गर्जन्मेघे, सिंहे, उष्ट्रे च

**महानिद्रा** कर्म०। मरणे तत्र पुनः प्रत्युत्थानाभावात्।

**महानिम्ब** पु० कर्म०। (घोड़ानिम) वृक्षभेदे।

**महानिशा** स्त्री० 'महानिशा तु विज्ञेया मध्यमप्रहरद्वय'मित्युक्ते रात्रेर्मध्यमप्रहरद्वये। [तन्त्रभेदे न०।

**महानील** पु०कर्म०। भृङ्गराजे,मानभेदे,नागभेदे, महाजम्ब्वाञ्च

**महानुभाव** पु० महान् अनुभाव आशयो यस्य। महाशये

**महापञ्चविष** 'शृङ्गी च कालकूटश्च मुस्तको वत्सनाभकः। शङ्खकर्णीति योगोऽयं महापञ्चविषाभिध' इत्युक्ते पञ्चविधे विषे

**महापत्त्रा** स्त्री०महत् पत्त्रमस्याः। महाजम्बूवृक्षे। [पथे च

**महापथ** पु०कर्म०। राजमार्गे, हिमालयोत्तरस्थे स्वर्गारोहण

**महापद्म** पु० कर्म० अष्टनागमध्ये, नागभेदे, कुबेरस्य निधिभेदे, 'अर्बुदमब्जं खर्वनिखर्वमहापद्मे'ति लीलावत्युक्तायाम् अयुतकोटिसंख्यायां, तत्संख्यान्विते, नृपभेदे च।

**महापातक** न० 'ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः महान्ति पातकान्याहुस्तत्संसर्गश्च पञ्चम इत्युक्तेषु पञ्चसु पातकेषु।

**महापिण्डीतक** पु० कर्म०। कृष्णवर्णे विपुलमदनवृक्षे।

**महापीलु** पु०कर्म०। मधुपीलौ अतिमधुरत्वात्तस्य हि महत्त्वम्

**महापुराण** न० 'सृष्टिश्चापि विसृष्टिश्च स्थितिस्तेषाञ्च पालनम्। कर्मणां वासना वार्त्ता मनूनाञ्च क्रमेण च। वर्णनं प्रलयानाञ्च मोक्षस्य च निरूपणम्। उत्कीर्त्तनं हरेरेव देवानाञ्च पृथक् पृथक्। महापुराणं विज्ञेयमेकादशकलक्षणमि'त्युक्ते व्यासप्रणीते पुराणभेदे।

**महापुरुष** पु०कर्म०। सुरश्रेष्ठे, नारायणे च। 'वन्दे महापुरुष! ते चरणारविन्दमि'ति भागवतम्।

**महापुरुषदन्ता** पु० महापुरुषस्य विष्णोः दन्ता इव महत्त्वात् मूलान्यस्य। शतमूल्याम्।

**महापुष्पा** स्त्री० महत् यन्त्रपुष्पत्वेन प्रशस्तं, पत्त्रापेक्षया स्थूलं वा पुष्पं यस्याः। अपराजितायाम्।

**महाप्रलय** पु०कर्म०। ब्रह्मणो दिनावसाने जायमानः सर्वभूतलयः प्रलयः तस्यैव स्वमानेन शतवर्षावसाने जायमानस्य महान् प्रलयः तस्मिन्, तदुपलक्षिते,जन्यद्रव्यानधिकरणीभूते काले च। जन्यभावानधिकरणीभूते काले इत्यन्ये।

**महाप्रसाद** पु० 'पादोदकञ्च निर्माल्यं नैवेद्यञ्च विशेषतः। महाप्रसाद इत्युक्त्वा ग्राह्यं विष्णोः प्रयत्नतः' इत्युक्ते देवनैवेद्यादौ विपुलप्रसन्नतायाञ्च।

**महाप्राण** पु० महान् बहुकालस्थायित्वात् श्रेष्ठः प्राणोऽस्य। द्रोणकाके कर्म०। वर्णोच्चारणस्य बाह्यप्रयत्नभेदे, स च वर्ग्यद्वितीयचतुर्थवर्णानां प्रथमस्थानानामुच्चारणप्रयत्नः तेषामुच्चारणे हि प्राणवायोर्भूयान् प्रयास इति तेषामपि महाप्राणत्वमुपचारात्।

**महाफल** पु० महत् पत्त्रापेक्षया वृहत् फलमस्य। बिल्ववृक्षे। इन्द्रवारुण्यां (राखालशशा) स्त्री०।

**महाबल** पु० महत् बलं यस्य। वायौ, बुद्धे च बलवति त्रि० महत् बलं यस्मात् ५ब०। सीसके न०। पीतवाट्यालके स्त्री०

**महाभारत** पु०न० 'चत्वारश्चैकतो वेदा भारतञ्चैतदेकतः। पुरा किल सुरैः सर्वैः समस्य तुलया धृतम्। चतुर्भ्यः सरहस्येभ्यो वेदेभ्योऽभ्यधिकं यदा। तदा प्रभृति लोकेऽस्मिन् महाभारतमुच्यते। महत्त्वात् भारतत्वाच्च महाभारतमुच्यते' इत्युक्तलक्षणे व्यासप्रणीते लक्षश्लोकात्मके ग्रन्थभेदे।

**महाभीता** स्त्री० कर्म०। लज्जालुलतायाम् स्पर्शमात्रेण हि सङ्कोचेन तस्या अतिभीतत्वम्। अतिभीते त्रि०।

**महाभूत** न०कर्म०। सर्वेषां पञ्चात्मकताप्राप्त्या स्थूलतापन्नेषु वृहत्सु पृथिव्यप्तेजोवाय्वाकाशेषु पञ्चसु भूतेषु। 'तं वेधा विदधे नूनं महाभूतसमाधिने'ति रघुः।

**महाभृङ्ग** पु० कर्म०। नीलभृङ्गराजे।

**महामनस्** त्रि० महदुदारं मनस्तद्व्यापारोऽस्य। महाशये।

**महामात्र** पु० 'मात्रा कर्मणि भूषायाम् वित्ते माने परिच्छदे।

मात्या तु महती येषां महामात्यास्तु ते स्मृता' इत्युक्ते । प्रधानामात्ये ।

**महामाया** स्त्री०कर्म० अन्यस्मिन् अन्यधर्म्मावभासो हि माया सर्व्वजगन्मूलत्वात्तस्या महत्त्वम् । जगत्कारणभूतायाम् अविद्यायां तदधिष्ठात्र्यां दुर्गायाञ्च 'महामाया हरेश्चैषा यया संमोह्यते जगदि'ति चण्डी ।

**महामाष** पु०कर्म० । राजमाषे मुद्गाद्यपेक्षया तस्य हि महत्त्वम्

**महामूल** पु० महत् शौर्य्यकारित्वात् श्रेष्ठं मूलमस्य । राजपलाण्डौ । [पशुषु महत्त्वात् तथात्वम् ।

**महामृग** पु० महान् मृगः पशुः । गजे, शरभे च तयोर्हि

**महामेद** पु०स्त्री० ६त०। वैद्यकप्रसिद्धाष्टवर्गोक्ते ओषधिभेदे ।

**महामोह** पु० महान् मोहः भ्रान्तिहेतुको वस्तुतोऽनिष्टेऽपि रागः । संसारतद्विषयकारणरूपेऽज्ञानभेदे 'तमोऽविवेको मोहः स्यादन्तःकरणविभ्रमः । महामोहस्तु विज्ञेयो ग्राम्यभोगसुखैषणे'त्युक्ते मैथुनादिसुखभोगेच्छारूपे अन्तःकरणवृत्तिभेदे च वैषयिकसुखस्य वस्तुतोऽनिष्टत्वात् तथात्वम्

**महाम्ल** न० कर्म० । अत्यम्ले, तिन्तिडीफले च तद्वृक्षे पु० ।

**महायज्ञ** पु०कर्म०। नित्यं गृहस्थकर्त्तव्ये वेदाध्ययनाग्निहोत्रयज्ञपितृतर्पणभूतबलिकर्म्मातिथिपूजनरूपेषु पञ्चसु कर्मसु।

**महारजत** न०कर्म्म० । काञ्चने । तस्य हि रञ्जकत्वात् महत्त्वम्, वृहद्रौप्ये धुस्तूरे च पु० ।

**महारजन** न० रज्यतेऽनेन ल्युट् कर्म०। कुसुम्भपुष्पे, स्वर्णे च ।

**महारथ** पु० 'एकोदश सहस्राणि योधयेद्यस्तु धन्विनाम् । शस्त्रशास्त्रप्रवीणश्च विज्ञेयः स महारथः' इत्युक्ते योधभेदे । [काञ्जिके न० ।

**महारस** पु० ६त० । खर्ज्जूरे, कशेरुणि, इक्षौ, पारदे च ।

**महाराज(जि)क** पु० महान् सन् राजते वुन् ष्ट० इत्त्वं वा । विंशत्यधिकशतद्वयसंख्याते गणदेवभेदे ।

**महाराजद्रुम** पु० कर्म० । आरग्वधे (सोन्दाल) ।

**महारात्रि** स्त्री०'ब्रह्मणश्च निपाते च महाकल्पो भवेन्नृप ! । प्रकीर्त्तिता महारात्रि'रित्युक्ते महाकल्पात्मके महाप्रलये 'अर्द्धरात्रात् परं यत्तु मुहूर्त्तद्वयमुच्यते। सा महारात्रिरुद्दिष्टे'ति तन्त्रोक्ते अर्द्धरात्रोपरि मुहूर्त्तद्वयात्मके रात्रिकाले ।

**महाराष्ट्र** पु०कर्म०। (महाराट्टा) देशभेदे। तद्देशः कारणत्वेनास्त्यस्या अच् गौ ङीप् । जलपिप्पल्याम्, शाकभेदे च स्त्री०

**महारिष्ट** पु०कर्म० । गिरिजाते निम्बभेदे । अत्यशुभे न० ।

**महारोग** पु०कर्म० । 'उन्मादो राजयक्ष्मा च श्वासस्त्वग्दोष एव च । मधुमेहश्चाश्मरी च तथोदरभगन्दरौ । इत्येतेऽष्टौ महारोगा महापातकसम्भवा' इत्युक्ते महापातकजन्येषु उन्मादादिषु रोगेषु ।

**महारौरव** पु० रुरोरयम् अण् कर्म्म० । 'महारौरवसंज्ञस्तु ऊर्द्ध्वाधस्ताम्रसंपुटे। धम्यते खदिराङ्गारैः पच्यते कालमचंय'मित्युक्ते नरकभेदे।

**महार्घ** त्रि० महानर्घो मूल्यं यस्य । बहुमूल्ये ।

**महार्णव** पु० कर्म० । महासमुद्रे ।

**महार्द्रक** न० कर्म० । वनार्द्रके ।

**महालय** पु० महान् आत्यन्तिको लयो यत्र । परमात्मनि कर्म० । वृहदालये तीर्थस्थाने, विहारे, सौराश्विनकृष्णपक्षे च न०। 'तस्यां दद्यात् न चेद्दत्तं पितॄणां वै महालये इति स्मृतिः ।

**महालक्ष्मी** स्त्री०कर्म० । चण्ड्याद्वितीयचरितदेवतारूपे 'सैव सैरिभमर्द्दिनीमिह महालक्ष्मीं सरोजस्थिता'मित्युक्तलक्षणे अष्टादशभुजान्विते दुर्गाशक्तिभेदे, तन्त्रोक्ते लक्ष्मीभेदे च ।

**महालोध्र** पु० कर्म०। लोध्रभेदे (पाठिया लोध) ।

**महावरा** स्त्री० वृणोति विस्तृणाति वृ-अच् कर्म० । दूर्वायाम्

**महावराह** पु०कर्म०। वृहद्वराहरूपधारिणि भगवदवतारभेदे

**महावरोह** पु० महान् अवरोहोऽस्य । वटवृक्षे ।

**महावल्ली** स्त्री० कर्म० । माधवीलतायाम् ।

**महावाक्य** न० कर्म्म०। परस्परसंबद्धार्थके वाक्यसमुदायरूपे एकवाक्ये 'वाक्यानामेकवाक्यत्वं पुनः संहत्य जायते' इति मीमांसकाः। वेदान्तोक्ते ब्रह्मविद्याप्रतिपादके 'तत्त्वमस्या'द्युपनिषद्वाक्ये, दानादौ अभिलापवाक्ये च ।

**महाविद्या** स्त्री० कर्म० । 'काली तारा महाविद्या षोडशी भुवनेश्वरी भैरवी, छिन्नमस्ता च विद्या धूमावती तथा । वगला सिद्धविद्या च मातङ्गी कमलात्मिका । एताः दश-महाविद्या' इत्युक्तासु काल्यादिषु दशसु देवीषु।

**महाविषुव** न० रवेर्मेषसंक्रमणे । तत्संक्रमणञ्च स्वरूपतः संक्रमणं, प्रभापुञ्जस्य संक्रमणं वा। तत्र प्रभापुञ्जसंक्रमणमयनांशानुसारेण अष्टमशताधिकषट्षष्टिवत्सरे रेकैकांशं परित्यज्य ततः पश्चात्पश्चात्तरादौ स्थाने भवति इदानीं च पश्चादयनं, पूर्व्वायने तु पूर्व्वपूर्व्वतरादौ स्थाने भविष्यति । इत्यतस्तस्य अनियतस्थानत्वात् स्वरूपसंक्रमस्य स्थिरः सर्व्वदैकस्थाने जायमानत्वात् ।

**महावीचि** पु० नास्ति वीचिः सुखं यत्र स अवीचिः कर्म०। सुखरहिते, 'यत्र कल्लोलेन नीयन्ते' इत्युक्ते वा नरकभेदे ।

**महावीर** पु०कर्म्म०। गरुडे, हनुमति, सिंहे, यज्ञाग्नौ, वज्रे

श्वेतलरङ्के, कोकिले, धत्तूरे, एकवीरवृक्षे, महाम्बूरे च क्षीरकाकोलीवृक्षे स्त्री० ।

**महावीर्य्य** पु०६ब० । वाराहीकन्दे, परमात्मनि च। अतिबलवति त्रि० । वनकार्पास्यां, संज्ञायां-सूर्य्यपत्न्याञ्च स्त्री० ।

**महावृहती** स्त्री० कर्म्म० । वार्त्ताक्याम् ।

**महावृक्ष** पु० कर्म्म० । स्नुहीवृक्षे, वृहत्तरौ च ।

**महाव्याधि** पु० कर्म्म० । महारोगे, कुष्ठादौ रोगे च ।

**महाव्याहृति** स्त्री० कर्म्म० । वैदिके भूर्भुवःस्वरात्मके मन्त्रत्रये

**महाव्रण** न० कर्म्म० । (नालिघा) दुष्टव्रणे ।

**महाव्रत** न० कर्म्म०। अतिशयव्रते शारदीयदुर्गापूजादौ 'महाव्रतं महापुण्यं शङ्कराद्यैरनुष्ठितमि'ति पुराणम् । द्वादश वार्षिके प्रायश्चित्तात्मके व्रतभेदे च ।

**महाशङ्ख** पु० कर्म्म०। तन्त्रे वीराचारप्रसिद्धे न्कपालास्थिजाते 'न्ललाटास्थिखण्डेन रचिता जपमालिका। महाशङ्खमयी माला ताराविद्याजपे प्रिये'त्युक्ते माल्यभेदे, वृहच्छङ्खे च । 'पौण्ड्रं दध्मौ महाशङ्ख'मिति गीता ।

**महाशठ** पु० कर्म्म० । राजधस्तूरे । अतिधूर्त्ते त्रि० ।

**महाशणपुष्पी** स्त्री० शणस्येव पुष्पमस्य ङीप् कर्म्म० । वृहच्छणपुष्प्याम् । स्वार्थे कन् । तत्रैव ।

**महाशता** स्त्री०शतं मूलानि सन्त्यस्य अच् कर्म्म०। वृहच्छतावर्य्यां

**महाशतावरी** स्त्री० कर्म्म० । वृहच्छतावर्य्याम् ।

**महाशय** त्रि० महान् उदार आशयो यस्य । महानुभावे ।

**महाशाखा** स्त्री० महती शाखाऽस्याः । नागवलायाम् ।

**महाशालि** पु० कर्म्म० । स्थूलशालौ । [अतिशीतले त्रि० ।

**महाशीता** स्त्री० महती शीता शीतलवीर्य्या । शतमूल्याम्

**महाशुक्ति** स्त्री० महती मुक्ताकारणत्वेन प्राशस्त्यात् शुक्तिः । मुक्ताहेतौ शुक्तौ । [ङीप्

**महाशूद्र** पु० कर्म्म० । आभीरे (आहीर) जातिभेदे तत्पत्न्यां

**महाश्मशान** न०कर्म्म०। काश्याम् समूलकर्म्मसहितसर्व्वजीवानां पुनरनुत्पादनाय नाशाधारत्वात् तस्यास्तथात्वम् ।

**महाश्यामा** स्त्री०कर्म्म० । श्यामालतायां, शिंशपाभेदे च।

**महाश्रावणिका** स्त्री० कर्म्म० (मुलकुड़ी) क्षुपभेदे ।

**महाश्वेता** स्त्री०कर्म्म० । सरस्वत्याम्, कृष्णभूमिकुष्माण्डे च ।

**महाष्टमी** स्त्री० कर्म्म०। 'आश्विने शुक्लपक्षस्य भवेद्या तिथिरष्टमी । महाष्टमीति सा प्रोक्ते'त्युक्तायामाश्विनशुक्लाष्टम्याम्

**महासर्ज्ज** पु० कर्म्म० । असनवृक्षे, पनसवृक्षे च (काटाल)

**महासह** पु०कर्म०। पुष्पप्रधाने कुब्जकवृक्षे, माषपर्ण्याम्, अम्लानवृक्षे च स्त्री०। अतिक्षमे त्रि० ।

**महासान्तपन** न० । कर्म०। सप्ताहसाध्ये स्मृत्युक्ते व्रतभेदे ।

**महासार** पु० महान् सारोऽस्य । दुष्खदिरे ।

**महासुगन्धा** स्त्री०सुष्ठु गन्धोऽस्याः कर्म्म० । गन्धनाकुल्याम् अतिसुगन्धयुक्ते त्रि० ।

**महासेन** पु०महती सेनाऽस्य। कार्त्तिकेये। वृहत्सेनाधिपतौ त्रि०

**महास्कन्ध** पु० महान् स्कन्धोऽस्य । जम्बूवृक्षे ।

**महाहास** पु० कर्म्म० । अट्टहासे, उच्चैर्हासे ।

**महाहिगन्धा** पु० अहेर्गन्धो हिंसा यस्मात् अहिगन्धो नकुलः समत्वेनाप्यस्य अच् कर्म० । गन्धनाकुल्याम् ।

**महाह्रस्वा** स्त्री०कर्म० । कपिकच्छ्वाम् (आलकुशी) अतिखर्व्वे त्रि०

**महि(ही)** स्त्री० मह-इन् वा ङीप् । पृथिव्याम् । ङीबन्तस्तु मालवदेशस्थे नदीभेदेऽपि ।

**महिका** स्त्री० मह्यते मह-कुन् । हिमे ।

**महिमन्** पु०महतो भावः इमनिच् डित्त्वेन टिलोपः। महत्त्वे, ईश्वरैश्वर्य्यभेदे च ।

**म(मि)हिर** पु० मह-(मिह-) किरच्। सूर्य्ये ।

**महि(हे)ला** स्त्री० मह-इलच् । योषिति, प्रियङ्गुलतायां, रेणुकागन्धद्रव्ये,मत्तायां स्त्रियाञ्च। एलच्। महेलापि,योषिति।

**महिष** पु० मह-टिषच् । स्वनामख्याते पशुभेदे,महिषासुरे च। राज्ञः कृताभिषेकायां स्त्रियां, महिषजातिस्त्रियाम्, ओषधिभेदे च स्त्री० ङीप् । [स्ववाहनादयोऽयत्र ।

**महिषध्वज** पु० महिषो ध्वजचिह्नं वाहनत्वेनास्य। यमे। महि

**महिषमर्द्दिनी** स्त्री० महिषं महिषासुरं मृद्नाति मृद-णिनि ङीप् इत० । दुर्गाभेदे । [तत्रैव ।

**महिषाक्ष** पु० महिषस्याक्षीव अच् । गुग्गुलुभेदे। स्वार्थे कन्।

**महिषासुर** पु० रम्भासुरेण महिष्यामुत्पादिते असुरभेदे, महिषाख्यगुग्गुलौ च । [भू-अच् । भूमिजगुग्गुलौ

**महिषासुरसम्भव** पु० महिषासुरात्तन्मेदसः सम्भवति

**महीक्षित्** पु०महीं क्षयते ईष्टे क्षि-ऐश्वर्य्ये क्विप् तुक् च। न्टपे

**महीज** न० मह्या जायते जन-ड । आर्द्रके। मङ्गलग्रहे, नरकासुरे च पु० ।

**महीध्र** पु०महीं धारयति धृ-क। पर्व्वते। अच्। महीधरोऽप्यत्र

**महीप्राचीर** न० मह्याः प्राचीरमिवावरकत्वात् । समुद्रे ।

**महीभृत्** पु०महीं बिभर्त्ति धारयति पालयति वा भृ-क्विप् । पर्व्वते, भूमिपाले च । ['महतो मह्यानि'ति स्मृतिः

**महीयस्** त्रि० अतिशयेन महान् महत्+ईयसु । अतिमहति

**महीयमान** त्रि० महीयते मही+कण्ड्वा० यक्-शानच् । पूज्ये, श्रेष्ठे च 'महीयमाना भवताऽतिमात्र'मिति भट्टिः

**महीरुह** पु॰ मह्यां रोहति रुह-क । वृक्षे, शाके च ।
**महीलता** स्त्री॰ मह्या लतेव । (केचो) किञ्चुलुके ।
**महेच्छ** त्रि॰ महती इच्छा यस्य । महाशये ।
**महेन्द्र** पु॰ महान् इन्द्रः इन्द्रस्यापि नियन्तृत्वात् । परमेश्वरे, महैश्वर्य्यवति इन्द्रे, जम्बुद्वीपस्थपर्व्वतभेदे च ।
**महेन्द्रकदली** स्त्री॰ महेन्द्रप्रिया तद्वर्णा वा कदली । कदलीभेदे
**महेन्द्रपुरी** स्त्री॰ ६त॰ । अमरावत्याम् । महेन्द्रनगर्य्यादयोऽप्यत्र
**महेन्द्रवारुणी** स्त्री॰ महेन्द्रस्य वरुणस्य तयोरियं प्रियत्वात् अण् देवताद्वन्द्वे उत्तरपदवृद्धिः । (माकाल) लताभेदे ।
**महेरणा** स्त्री॰ महं गजोत्सवमीरयति ल्यु । शल्लकीवृक्षे ।
**महेश** पु॰ कर्म॰ । शिवे । महेश्वरोऽप्यत्र 'महेश्वरस्त्र्यम्बक एव नापर' इति रघुः ।
**महेशबन्धु** पु॰ ६त॰ । विल्ववृक्षे ।
**महैला** स्त्री॰ कर्म॰ । स्थूलैलायाम् (बड़एलाची)
**महोक्ष** पु॰ महान् उक्षा अच् समा॰ । वृहद्वृषे, 'महोक्षं वा महाजं वा श्रोत्रियाय प्रकल्पयेदि'ति मनुः ।
**महोटी** स्त्री॰ महान्ति फलापेक्षया स्थूलानि उटानि पर्णान्यस्याः ङीप् । वृहत्यां, उत्पले च ।
**महोत्पल** पु॰ कर्म॰ । पद्मे, सारसपक्षिणि च ।
**महोत्सव** पु॰ कर्म॰ । सन्ततसुखसम्पादकव्यापारे ।
**महोत्साह** त्रि॰ महान् उत्साहो यस्य । अत्यन्तोद्यमयुक्ते ।
**महोदधि** पु॰ कर्म॰ । समुद्रे ।
**महोदय** पु॰ महान् उदयो वृद्धिराधिपत्यं वा यत्र । कान्यकुब्जदेशे । तद्देशस्थे पुरभेदे न॰ । स्वल्पन्यूनार्द्धोदययोगात् 'अमार्कपाते श्रवणे'त्यादिलक्षणात् 'किञ्चिद्‌ूने महोदय' इत्युक्ते किञ्चिदूने योगभेदे पु॰ । नागबलायां स्त्री॰ ।
**महोदरी** स्त्री॰ महदुदरं यस्याः । शतमूल्याम् वृहदुदरयुक्ते त्रि॰
**महोन्नत** पु॰ कर्म॰ । तालवृक्षे । अत्यन्तोन्नतियुक्ते त्रि॰ ।
**महोरग** पु॰ कर्म॰ । वृहत्सर्पभेदे महोरगाकारोऽस्त्यस्य अच् । तगरमूले न॰ ।
**महोल्का** स्त्री॰ कर्म॰ । वृहदुल्कायाम् ।
**महौषध** न॰ कर्म॰ । शुण्ठ्याम्, लशुने, वाराहीकन्दे, वत्सनाभे विषे, पिप्पल्याम्, अतिविषायां, वीर्य्यदौषधमात्रे च ।
**महौषधि** स्त्री॰ कर्म॰ । दूर्व्वायां, लज्जालुक्षुपे 'सहदेवी तथा व्याघ्री बला चातिबला तथा । शङ्खपुष्पी तथा सिंही अष्टमी च सुवर्च्चला । महौषध्यष्टकं प्रोक्त'मित्युक्ते देवादीनां स्नानद्रव्यभेदे । श्वेतकण्टकार्य्यां ङीप् ।
**मा** शब्दे अक॰ माने सक॰ जु॰ आ॰ अनिट् । मिमीते अमित ।
**मा** माने अदा॰ प॰ सक॰ अनिट् । माति अमासीत् ।
**मा** माने दि॰ आ॰ सक॰ अनिट् । मायते अमास्त ।
**मा** अव्य॰ ङिदनुबन्धात् दैवादिकात् माधातोः क्विप् । वारणे । धातोर्ङित्त्वेन शब्दे ङित्त्वव्यवहारात् न माङ्योगे इति पाणिनिसूत्रम् । ङिदनुबन्धशून्यधातुनिष्पन्नस्तु न ङित् तेन तद्योगे अडागमः स्यादेव 'मा निषाद । प्रतिष्ठां त्वमगमः' इति रामायणम् । मा-क-टाप् । लक्ष्म्याम्, मातरि च स्त्री॰ । मा-भावे क्विप् । माने स्त्री॰ ।
**मांस** न॰ मन-स दीर्घश्च । 'मां स भक्षयितामुत्र यस्य मांसमिहाद्म्यहम् । इति मांसस्य मांसत्व'मित्युक्ते प्राणिदेहस्थशोणितपरिपाकजे धातुभेदे । [मांसरोहिण्यां लतायाम्
**मांसच्छदा** स्त्री॰ मांसं छादयति छद-णिच्-अच् ह्रस्वः ।
**मांसज** न॰ मांसाज्जायते जन-ड । देहस्थे मांसजन्ये मेदसि
**मांसदलन** पु॰ मांसं प्लीहात्मकं मांसं दलयति दल-णिच्-ल्यु । प्लीहघातकवृक्षे ।
**मांसद्राविन्** पु॰ मांसं द्रावयति णिच्-णिनि । अम्लवेतसे
**मांसपेशि** स्त्री॰ ६त॰ । गर्भस्यावयवभेदे । वा ङीप् तत्रैव ।
**मांसफला** स्त्री॰ मांसमिव कोमलं फलं यस्याः । वार्त्ताक्याम् ।
**मांसमासा** स्त्री॰ मस-परिणामे घञ् मांसस्य परिणामो यस्याः ५ब॰ । माषपर्ण्याम् । [पुक्। सुगन्धिद्रव्यभेदे (चाम्कषा)
**मांसरोहिणी** स्त्री॰ मांसं रोपयति रुह-णिच् णिनि वा न
**मांसल** त्रि॰ मांस+बलवत्यर्थे लच् । बलवति, स्थूले, पुष्टे च ।
**मांसलफला** स्त्री॰ मांसलं पुष्टं फलमस्याः । वार्त्ताक्याम् ।
**मांससार** पु॰ ६त॰ । मेदसि । मांसस्नेहादयोऽप्यत्र ।
**मांसहासा** स्त्री॰ मांसेन हस्यते कर्म्मणि घञ् । देहस्थचर्म्मणि
**मांसिक** त्रि॰ मांसं पण्यमस्य ठक् । मांसविक्रयोपजीविनि । (कसाइ) । [जटामांस्याम् ।
**मांसिनी** स्त्री॰ मांसस्तदाकारस्तत्तुल्यं वाऽस्त्यस्याः इनि ।
**मांसी** स्त्री॰ मांसमस्त्यस्य अच् गौ॰ ङीष् । जटामांस्याम् ।
**माकन्द** पु॰ माति मा-क्विप् माः परिमितः कन्दोऽस्य । आम्रे । आमलक्यां, पीतचन्दने, (वङ्कमूली) चन्दने, नगरभेदे च स्त्री॰ गौरा॰ ङीष् ।
**माकरी** स्त्री॰ मकरस्य तत्स्थरविकालस्य इयम् अण् । मकरस्थितरविकाले तदारब्धमाघमासस्य शुक्लसप्तम्यां 'तस्मै रोकञ्च शोकञ्च माकरी हन्तु सप्तमी'ति स्मृतिः ।
**माक्ष** सृहायां भ्वा॰ पर॰ सक॰ सेट् इदित् । माङ्क्षति अमाङ्क्षीत् ।
**माक्षि(क्षी)क** न॰ मक्षिकाभिः सम्भृत्य कृतम् अण् वा॰ वा दीर्घः । उपधातुभेदे मधुनि, तत्तुल्यगुणे स्वर्णमाक्षिके रौप्यमाक्षिके च ।

**माक्षिकज** न० माक्षिकाज्जायते जन-ड । सिक्थके (मोम)

**माक्षिकफल** पु० माक्षिकमिव मधुरं फलमस्य । मधुनारिकेले

**माक्षिकशर्करा** स्त्री०६त०। मधुजाते खण्डभेदे (मिताखण्ड)

**मागध** पु० मगधदेशे भवः अण् । श्वेतजीरके स्तुतिपाठके (भाट) वर्णसङ्करभेदे च यूथिकायां, पिप्पल्यां, सूक्ष्मैलायां, शर्करायां,भाषाविशेषे च स्त्री०ङीप् । मगधदेशजाते त्रि०

**मागधखारिका** स्त्री० लीलावत्युक्ते परिमाणभेदे ।

**माघ** पु० मघानक्षत्रयुक्ता पौर्णमासी माघी सात्र मासेऽण् । चैत्रावधिके एकादशे चान्द्रे मासे । तत्पौर्णमास्यां स्त्री० ङीप् । शिशुपालवधकाव्ये,तत्कर्त्तरि च पु०। 'तावद्भा भारवेर्भाति यावन्माघस्य नोदय' इत्युद्भटः ।

**माघ्य** न० माघे भवं यत् । कुन्दपुष्पे ।

**माङ्गल्य** न० मङ्गलमेव मङ्गलाय हितं वा ष्यञ् । मङ्गले,मङ्गलसाधने च । [तायाम् ।

**माङ्गल्यार्हा** स्त्री०माङ्गल्यमर्हति अर्ह-अच् । त्रायमाणलमाचिका स्त्री० मच-ण्वुल् । अम्बष्ठायां,मक्षिकायाञ्च ।

**माञ्जिष्ठ** न० मञ्जिष्ठया रक्तमण् । रक्तवर्णे । तद्वति त्रि० ।

**माठर** पु० मन-अरन् ठान्तदेशः ततः स्वार्थे अण्, सूर्यस्य पारिपार्श्वे मठति अरण् वा । सूर्यस्य पारिपार्श्विके गणभेदे

**माण(न)क** न० मा-अकच् णुट् नुट् वा। स्वनामख्याते कन्दभेदे 'हरिद्रा माण(न)कं कचुरिति नवपत्त्रिकाप्रमाणम् ।

**माणव** पु० मनोरपत्यं अण् अल्पार्थे णत्वम् । अल्पवयस्के मनुष्ये । स्वार्थे कन् । तत्र, हारभेदे च ।

**माणवीन** त्रि० माणवस्येदम् खञ् । बालकसम्बन्धिनि ।

**माणव्य** न० माणवानां समूहः यत् । बालकसमूहे ।

**माणिक्य** न०मणिरिव कायति कै-क स्वार्थे ष्यञ् । (माणिक) रक्तवर्णे रत्नभेदे,व्टहगोधिकायाञ्च । [सैन्धवलवणे ।

**माणिबन्ध**(मन्थ) न० मणिबन्ध (मन्थ) पर्व्वते भवः अण् ।

**मातङ्ग** पु० मतङ्गस्य मुनेरयम् अण् । गजे, किरातजातिभेदे, अश्वत्थवृक्षे च । दशमहाविद्याभेदे स्त्री०ङीप् । [भेदे ।

**मातङ्गमकर** पु० मातङ्ग इव मकरो जलजन्तुः । महामत्स्य-

**मातरपितृ** स्त्री०माता च पिता च द्वन्द्वे मातुर्वा मातरादेशः। मातापित्रोः । पक्षे मातरा नङ् । तयोरर्थयोः ।

**मातरिश्वन्** पु० मातरि आकाशे श्वयति वर्द्धते श्वि-कनिन् डिच्च अलुक्स० । वायौ । [सारथौ

**मातलि** पु० मतं लाति ला-क मतलस्तस्यापत्यम् इञ् । इन्द्र-

**माता** स्त्री० मा-अतच् । जनन्याम् । 'विश्वेश्वरीं विश्वमाता'-मिति दुर्गास्तवः ।

**मातामह** पु० मातुः पिता मातृ+डामह । मातुः पितरि । तत्पत्न्यां स्त्री० ङीप् ।

**मातुल** पु० मातुर्भ्राता मातृ-डुलच् । मातुर्भ्रातरि । तत्पत्न्यां वा ङीप् वा आनुक्च । मातुलानी मातुली मातुला च । मद-णिच्-उलच् पृ० दस्य तः । धुस्तूरे,मदनवृक्षे, सर्पभेदे च

**मातुलपुत्रक** न०मातुलस्य धुस्तूरस्य पुत्र इव कायति कै-क । धुस्तूरे, ६त० कन् मातुलसुते ।

**मातुलुङ्ग** पु० मातुलं गच्छति गम-खच् डिच्च पृ० । बीजपूरे, मधुकर्कट्याञ्च । संज्ञायां कन् । वनबीजपूरे ।

**मातृ** त्रि० मा-तृच् । प्रमाणकर्त्तरि परिमाणकर्त्तरि, जीवे आकाशे च औ मातारौ । मा-तृ । 'ब्राह्मी माहेश्वरी चण्डी वाराही वैष्णवी तथा कौमारी चैव चामुण्डा चर्चिकेत्यष्टमातरं इत्युक्ते,शिवसहचरीभेदे, जनन्याम् भूमौ, विभूतौ, लक्ष्म्याम्, रेवत्याम्, आखुकर्ण्याम्, इन्द्रवारुण्याम्, (राखालशशा) जटामांस्यां, चण्डीप्रसिद्धासु देवीशक्तिषु च 'मातृः कोपमयाविष्ट' इति चण्डी ।

**मातृका** स्त्री०मातेव कायति कै-क । उपमातरि, ब्रह्माण्यादिषु चण्डीप्रसिद्धदेवीमूर्त्तिषु सर्व्वशब्दोत्पादकेषु अकारादिकोनपञ्चाशद्वर्णेषु, करणे, स्वरे च । मातृ+स्वार्थे कन् । मातृशब्दार्थे ।

**मातृबन्धु** पु० ६त० । मातुः पितुःस्वसुः पुत्रा मातुर्मातुःस्वसुः सुताः । मातुर्मातुलपुत्राश्च विज्ञेया मातृबन्धव, इत्युक्तेषु मातुः पितृष्वस्रीयादिषु । मातृबान्धवोऽप्यत्र ।

**मातृष्वसृ** स्त्री० ६त० । मातुर्भगिन्याम् 'अलुक्स० । मातुःष्वसाप्यत्र ।

**मातृष्वस्रेय** पु० मातृष्वसुरपत्यम् ठक् । मातुर्भगिनीपुत्रे तत्कन्यायां स्त्री० ङीप् । छण् । मातृष्वस्रीयोऽप्यत्र ।

**मातृसिंही** स्त्री० मातुः प्रमातुः सिंहीव । वासकवृक्षे ।

**मात्र** न० मा-त्रन् । साकल्ये अवधारणे च। अविच्छेदे,अल्पे, परिमाणे,कर्णभूषायाम्, वित्ते, लघुवर्णोच्चारणकाले, वर्णावयवभेदे, 'कालेन यावता पाणिः पर्य्येति जानुमण्डले । सा मात्रा कविभिः प्रोक्ता' इत्युक्तेषु ह्रस्वदीर्घप्लुतादिषु च स्त्री०। मीयन्तेऽनया विषयाः मा-त्रन् । इन्द्रियवृत्तौ । 'मात्रास्पर्शास्तु कौन्तेये'ति गीता । [काकारे चक्रे ।

**मात्रापताका** स्त्री० छन्दोग्रन्थोक्ते मात्राप्रस्तावानुगुणे पता-

**मात्रामर्कटी** स्त्री० छन्दोग्रन्थोक्ते मात्रावृत्तप्रस्तावानुगुणे मर्कटीजालचक्रभेदे ।

**मात्रामेरु** पु० छन्दोग्रन्थोक्ते मात्रावृत्तप्रस्तावानुगुणे मेरुचक्रे

मात्रावृत्त न० मात्रया कृतं वृत्तम् । आर्यादौ छन्दोभेदे ।
मात्सर्य्य न० मत्सरस्य भावः ष्यञ् । परगुणद्वेषे 'मात्सर्य्यमुत्सार्य्य विचार्य्येति साहि० । [ज्योत् ।
माथ वधे सक० क्लेशे अक०भ्वा०प०सेट् इदित् । मान्थति अमा
माथ पु० मथ-घञ् । पथि, मन्थने च ।
माथुर त्रि० मथुरायां भवो मथुरायाः आगतो वा अण् । मथुरानगरीभवे, तत आगते च ।
माद पु० मद-घञ् । दर्पे, हर्षे च ।
मादक त्रि० मादयति मद-णिच् ण्वुल् । मत्तताकारके द्रव्ये मादयति कर्त्तरि ण्वुल् । दात्यूहे पु० ।
मादन न० मादयति मद-णिच्-ल्यु । लवङ्गे । कामदेवे, मदनवृक्षे च पु० । विजयायां, माकन्दायाञ्च स्त्री० गौ० ङीष् ।
मादृश(श्) त्रि० ममेव दर्शनमस्य दृश-कञ्-क्विप्, वा । मम तुल्यदर्शने मत्सदृशे । [अतिविषायाञ्च ।
माद्री स्त्री० मद्रे भवा अण् । पाण्डुराजस्य द्वितीयपत्न्याम्
माधव पु०माया धवः । नारायणे । मधु+स्वार्थे अण् । वसन्ते 'स माधवेनाभिमतेन सख्ये'ति कुमार० । मधुने पुष्परसाय मद्याय वा हितः अण् । वैशाखे तस्य बहुपुष्पवत्त्वाम् तद्धितत्वम् । मधूकवृक्षे च तत्पुष्पेण हि मद्यसम्भवः । मधु बाहुल्येनास्त्यस्याः अण् । वासन्तीलतायाम् स्त्री० ङीप् ।
माधवीलता स्त्री०कर्म० । स्वनामख्यातायां लतायाम् ।
माधवेष्टा स्त्री० माधवे वैशाखे माधवस्य कृष्णस्य वा इष्टा । वाराहीकन्दे ।
माधवोचित न० माधव उचितो यस्य । कक्कोलके ।
माधवोद्भव पु० माधवे वैशाखे उद्भवति फलवत्त्वेन उद्+भू-अच् । (पियाल) राजादन्याम् ।
माधुर न० मधु-राति भ्रमरेभ्यो ददाति रा क-स्वार्थे अण् । मल्लिकापुष्पे ।
माधुरी स्त्री० मधुरस्य भावः ष्यञ् माधुर्य्यं षित्त्वात् स्त्रीत्वपक्षे ङीष् यलोपः । 'माधुर्य्यं, मधुरत्वे, सदाखलत्वमाधुरीधारे'त्युद्भटः । मधुर+स्वार्थे अण् । मदिरायाम् ।
माध्यन्दिन न० मध्यन्दिनमेव-अण् । मध्यमदिने तदधिकृत्य कृतो ग्रन्थः अण् शुक्लयजुर्वेदीयशाखाभेदे ।
माध्वीक स्त्री० मधुना मधूकपुष्पेण निर्वृत्तम् ईकक् । मधूकपुष्पजाते मद्ये । मधु एव स्वार्थे ईकक् द्राक्षाफले 'माध्वी माध्वीक ! चिन्ता विजहत्विति जयदेवः । [क्लीबे
माध्वीकफल पु० माध्वीकमिव मधुरं फलमस्य । मधुनारि
माध्वीमधुरा पु०माध्वीकमिव मधुरा पू०कलोपः । मधुरख-

र्जूरिकायाम् । [अमीमांसिष्ट ।
मान विचारे भ्वा० आ० सक०सेट् स्वार्थे सन् । मीमांसते
मान अर्च्चे वा चु०उ०पक्षे०भ्वा०पर०सक० सेट् । मानयति ते मानति अमीमनत्-त अमानीत् ।
मान न० मा-ल्युट् । परिमाणे हस्तद्वयप्रस्थाद्यैर्द्रव्यपरिच्छेदे, प्रमाणे गानाङ्गे कालक्रियायां तालविरामोपलक्षिते कालव्यापारे च । मन-घञ् । आत्मनि उत्कर्षाभिमानात्मिकायां चित्तसमुन्नतौ । 'स्वाभीष्टक्षेमवीक्षादिविरोधी मान उच्यते' इत्युक्ते अनुरक्तदम्पत्योः अवस्थाभेदे 'त्यज मयि मानमनिदानमि'ति जयदेवः सम्माने च ।
मानग्रन्थि पु० मानस्य ग्रन्थिर्बन्धनं यस्मात् । अपराधे ।
मानरन्ध्रा स्त्री० मानाय कालप्रमाणज्ञानाय रन्ध्रं यस्याः । ताम्रनिर्म्मिते सच्छिद्रे कालज्ञानहेतौ घटीयन्त्रभेदे ।
मानव पु० मनोरपत्यम् अण् । मनुष्ये स्त्रियां जातौ ङीप् ।
मानस न० मन एव अण् । मनसि, कैलासान्तिकस्थे ब्रह्मणा कृते सरोवरभेदे च ।
मानसव्रत न०मनसा कृतं मानसं कर्म० । 'अहिंसासत्यमस्तेयं ब्रह्मचर्य्यमलुब्धता । एतानि मानसानिस्तु व्रतानी'त्युक्तेषु अहिंसादिषु ।
मानसौकस् पु० मानसमोको यस्य । हंसे ।
मानिनी स्त्री० मान-इनि । फलीवृक्षे, मानवत्यां स्त्रियां च
मानुष पु०मनोरयम् अण् सुक् च । मानवे, ततोजातौ स्त्रियां ङीप् मानुषी ।
मानुष्य न० मानुषस्य भावः यत् । मनुष्यत्वे ।
मान्द्य न० मन्दस्य भावः ष्यञ् । रोगे, मन्दतायाञ्च ।
मान्धातृ पु०मामित्थं धयति धे-तृच् । 'मामयं धास्यतीत्यस्मात् मान्धातासौ प्रकीर्त्तित' इति निरुक्तेः युवनाश्वराजपुत्रे नृपभेदे ।
मान्य पु० मान-अर्च्चायां कर्म्मणि ण्यत् । पूज्ये ।
मामक त्रि०मम-इदम् अस्मद्+अण् ममादेशः । मत्सम्बन्धिनि खञ् । मामकीनोप्यत्र ।
माया स्त्री०मा-य नैरुक्तम् । अविद्यायाम्, कापट्ये, इन्द्रजालादौ, मिथ्याबुद्धिहेतुज्ञानभेदे, कृपायां, दम्भे, लक्ष्म्यां बुद्धमातरि, ईश्वरस्योपाधौ,अघटनघटनसाधिकायां शक्तौ । [(बाजीकर)।
मायाकृत् पु० मायामिन्द्रजालं करोति कृ-क्विप् । मायाकरे
मायादेवीसुत पु० तत० । बुद्धे ।
मायावत् त्रि०माया+अस्त्यर्थे मतुप् मस्य वः । मायाविशिष्टे कंसराजे पु० । कामपत्न्यां स्त्री० ङीप् । [ङीप

**मायाविन्** त्रि॰ माया+अस्त्यर्थे विनि । मायाकरे स्त्रियां

**मायिक** त्रि॰मायास्त्यस्य ठन् । मायाकरे । इनि मायीप्यत्र ।

**मायु** पु॰ मा-यु । देहस्थे पित्ते । [मयूरसम्बन्धिनि त्रि॰ ।

**मायूर** न॰ मयूराणां समूहः तस्येदं वा अण् । मयूरसङ्घे ।

**मायूरी** स्त्री॰मयूरस्येदं प्रियत्वात् अण् ङीप् । अजमोदायाम्

**मार** पु॰ मृ-घञ् । मरणे । मारयति मृ-णिच्-अच् । कामदेवे, विघ्ने, धुस्तूरे च । [मारिभये । (वाज) पक्षिभेदे च

**मारक** पु॰मृ-णिच् ण्वुल् मृ-णिच् घञ् स्वार्थे कन् वा। मारणे

**मारकस्थान** न॰ मारणकारणे स्थाने । 'अष्टमं चायुषः स्थानमष्टमादष्टमञ्च यत् । तयोरपि व्ययस्थानं मारकस्थानमुच्यते,' इत्युक्ते जन्मलग्नात् सप्तमे द्वितीये च स्थाने ।

**मारि** स्त्री॰ मृ॰णिच्-इन् । मारणे वा ङीप् मारीत्यप्यत्र । 'मारीभये राजभये' इति वटुकस्तवः ।

**मारिष** पु॰ रिष-हिंसायाम् निषेधार्थकमाशब्देन स॰ । नाट्योक्तौ आर्य्ये, हिंसानिवारकतया तस्य तथात्वम् । तण्डुलीयशाके, दक्षमातरि च स्त्री॰ टाप् ।

**मारीच** पु॰ तारकाराक्षसीपुत्रे रावणानुचरे राक्षसविशेषे ।

**मारुतव्रत** न॰ 'प्रविश्य सर्व्वभूतानि यथाचरति मारुतः । तथा चरैः प्रवेष्टव्यं व्रतमेतद्धि मारुतमि'त्युक्ते राज्ञां धर्मभेदे

**मारुतात्मज** पु॰६त॰ हनुमति, भीमे च इञ्। मारुतिरप्यत्र ।

**मारुतापह** पु॰ मारुतं वायुदोषमपहन्ति अप+हन-ड । वरुणवृक्षे । वायुनाशके त्रि॰।

**मार्कण्ड** पु॰मृकण्डोरपत्यम् अण् पृ॰। मुनिभेदे ढक्। यक॰ मार्कण्डेयोप्यत्र । तद्दृष्टे लताभेदे स्त्री॰ । [भृङ्गराजे ।

**मार्कव** पु॰ मारयति क्विप्-मारि केशक्लेशे कूयते कू-अच् ।

**मार्ग** संस्कारे सर्पणे च चुरा॰ उभ॰ सक॰ सेट्। मार्गयति अममार्गत् त ।

**मार्ग** अन्वेषणे वा॰चु॰उभ॰पक्षे भ्वा॰प॰सक॰ सेट् । मार्गयति-ते । मार्गति अममार्गत् त । अमार्गीत् । 'न्मृपतेरमार्गीदि'ति भट्टिः । भ्वा॰ आ॰ इत्यन्ये तेन मार्गते, मार्गमाण इत्यादि सिद्धम् ।

**मार्ग** पु॰ मृज-शुद्धौ-मार्ग-अन्वेषणे वा घञ् । पथि-तद्विशेषे प्रमाणम् वृहदभिधाने वक्ष्यते । [ल्यु। याचके त्रि॰ शरे पु॰

**मार्गण** न॰ मार्ग-ल्युट् । अन्वेषणे याचने, प्रणये च । कर्त्तरि

**मार्गशिर** पु॰ मार्गशिरया युक्ता पौर्णमासी अण् सा यत्र मासे पुनरण्। चान्द्रे अग्रहायणे मासि तत्पौर्णमास्यां स्त्री॰ङीप्

**मार्गशीर्ष** पु॰ साधनं मार्गशिरवत् । अग्रहायणे मासि। तत्पौर्णमास्यां स्त्री॰ ङीप् ।

**मार्गित** त्रि॰ मार्ग-क्त । अन्वेषिते । [यति-ते अममार्ज्जत्-त

**मार्ज्ज** मार्ज्जने सक॰ ध्वनौ अक॰चुरा॰उभ॰ सेट् । मार्ज्ज-

**मार्ज्जन** न॰ मार्ज्ज-ल्युट्। प्रोञ्छनादिना निर्मलीकरणे । युच् । तत्रैवार्थे स्त्री॰सा च मुरजध्वनौ च। करणे ल्युट् । सम्मार्जन्याम् (झाटा) । स्त्री॰ ङीप् ।

**मार्ज्जार(ल)** पु॰ मृज-आरन् वा रस्य लः । विड़ाले रक्तचित्रके खटासे च । ततः संज्ञायां कन् । मयूरे ।

**मार्ज्जारगन्धा** स्त्री॰ मार्ज्जारस्येव गन्धो यस्याः । मुद्गपर्णीभेदे । स्वार्थे कन् । तत्रैव ।

**मार्ज्जारी** स्त्री॰ मृज-आरक् गौ॰ङीष् । कस्तूर्य्याम् खटासजन्तौ, मार्जारयोषिति च ।

**मार्ज्जारी(ली)य** पु॰ मार्ज्जार+(ल)स्वार्थे छ, मृज-आरीयक् रस्य लत्वम् वा । विडाले, शूद्रे च कायशोधने न॰ ।

**मार्जित** पु॰. मार्ज-क्त । शोधिते । दधि-खण्डमधुसर्पिर्मरिचादिकृते, कर्पूरादिवासिते भक्ष्यभेदे (रसा) ।

**मार्त्तण्ड** पु॰ मृते अण्डे भवः अण् शक॰ । सूर्य्ये। तस्य च मृताण्डजन्म 'मारितञ्च यतः प्रोक्तमेतदण्डं त्वयादितिम् तस्मान्मुने! सुतस्तेऽयं मार्त्तण्डाख्यो भविष्यती'ति पुराणोक्त

**मार्त्तिक** न॰मृत्तिकया नि र्मितम् अण् । शरावे (शरा) मृण्मये त्रि

**मार्द्दङ्गिक** त्रि॰ मृदङ्गं तद्वादनं शिल्पमस्य ठक् । मृदङ्गवादके

**मार्द्दव** न॰मृदोर्भावः । मृदुत्वे, परदुःखासहिष्णुतायाम् द्रवीभावे च 'अभितप्तमयोऽपि मार्द्दवं भजते कैव कथे'ति रघुः ।

**मार्ष** पु॰ मृष-क ततः स्वार्थे अण्। तण्डुलीयशाके ।

**मार्ष्टि** स्त्री॰ मृज-क्तिन् । शोधने । [जातिभेदे

**माल** पु॰ मल-संज्ञायां वञ् । 'भिल्ला किराताश्चे'त्युक्ते

**मालक** न॰ मल-ण्वुल् । स्थलपद्मे । (माला) नारिकेलपात्रभेदेच

**मालती** स्त्री॰ मां लक्ष्मीं शोभां वा लतति वेष्टते लत-अण् ङीप् । जातीलतायां, युवत्यां, काकमाच्यां, नदीभेदे, विशल्यायां, ज्योत्स्नायां, निशायाञ्च ।

**मालतीतीरज** पु॰ मालत्या नदीभेदस्य तीरे जायते जन-ड। टङ्कणे (सोहागा) मालतीतीरभवाद्योप्यत्र ।

**मालतीपत्री** स्त्री॰ मालत्यास्तन्नामकजात्याइव पत्रमस्याः । जातीपत्रयाम् (जैयत्री) । [जातीफले ।

**मालतीफल** न॰मालत्यास्तन्नामकजात्याः फलम् । (जायफल)

**मालभारिक** त्रि॰ मालानां भारोऽस्त्यस्य ठन् पूर्व्वपदह्रस्वः मालानां भारवति ।

**मालव** पु॰ अवन्तिदेशे (मालओया देश) रागभेदे च ।

**मालविका** स्त्री॰ मालवे भवा ठक् । त्रिवृति (तेओड़ि)

**मालसी** स्त्री॰ मालं मलनं जटादिना दुष्टत्वं स्यति सो-क गौ॰ ङीष्। केशपुटिकारके द्रव्ये, रागिणीभेदे च।

**मालाकण्ट** पु॰ मालाकारः कण्टः कण्टको यस्य। अपामार्गे।

**मालाकन्द** पु॰ मालाकारः कन्दो यस्य। मूलभेदे।

**मालाकार** पु॰ मालां करोति कृ-अण्। (माली) वर्णसङ्कर भेदे। माल्यकारके त्रि॰।

**मालाग्रन्थि** पु॰ मालया ग्रन्थिरत्र। मालादूर्व्वायाम्।

**मालातृण** न॰ मालाकारं तृणम्। भूतृणे। स्वार्थे कन्। तत्रैव

**मालादीपक** न॰ अलङ्कारोक्ते अर्थालङ्कारभेदे।

**मालादूर्व्वा** स्त्री॰ मालाकारा दूर्वा। (गाठिदूर्व्वा) दूर्व्वाभेदे

**मालारिष्टा** स्त्री॰ मालाभूतमरिष्टं यस्याः ५ब॰। पाठ्याम्

**मालाली** स्त्री॰ मालामलति भूषयति अल-अण् ङीप्। पृक्कायां (पिडिङ्गशाके) स्वार्थे कन्। तत्रैव।

**मालिक** पु॰ माला तन्निर्माणं शिल्पमस्य ठन्। मालाकारे जातिभेदे, पक्षिभेदे, रञ्जके च। माल्यकारके त्रि॰।

**मालिका** स्त्री॰ मालैव कन् अत इत्त्वम्। नवमल्लिकायां, ग्रीवालङ्कारे, नदीभेदे सुरायां अतस्याम्, पुष्पमाल्ये, च। 'पाशाक्षमालिकाम्भोजेति लक्ष्मीध्यानम्।

**मालिन्** पु॰माला शिल्पमस्त्यस्य इनि। मालाकारे,माल्यवति त्रि॰ मालाकारपत्न्यां, पञ्चदशाक्षरपादके, छन्दोभेदे, गौर्य्याम् चम्पानगर्य्यां, मन्दाकिन्यां, कण्वाश्रमान्तिकस्थे नदीभेदे, अग्निशिखाद्रव्ये, दुरालभायां च स्त्री॰ ङीप्।

**मालु** स्त्री॰ मल-उण्। पत्रलतायां (पातलता) नार्य्याञ्च।

**मालुधान** पु॰ मालुरिव पत्रलतेव धीयतेऽसौ धा-कर्मणि ल्युट्। (मालुयासाप) सर्पभेदे। लताभेदे स्त्री॰ङीप्।

**मालूर** पु॰मां लक्ष्मीं परेषां लुनाति लू-रक्। विल्वे, कपित्थे च

**मालेय** त्रि॰ मालायां साधुः ढक्। मालारचनानिपुणे।

**माल्य** न॰ मालायै हितं यत्। पुष्पे। स्वार्थे ष्यञ्। पुष्पमालायाम्, मूर्द्धिस्थायां पुष्पमालायाञ्च।

**माल्यपुष्प** पु॰ मालायै हितं पुष्पमस्य। शणवृक्षे शणपुष्प्याम् स्त्री॰ ङीप्। स्वार्थे कन्। तत्रैव।

**माल्यवत्** त्रि॰ माल्यमस्त्यस्य मतुप् मस्य वः। माल्ययुक्ते केतुमालेलावृतवर्षयोः सीमाभूते पर्व्वतभेदे, सुकेशराक्षस पुत्रे रावणमन्त्रिणि राक्षसभेदे च। [कारके

**माशब्दिक** त्रि॰ मेति शब्दं निषेधाय करोति ठक्। निषेध-

**माष** पु॰ मष-संज्ञायां घञ्। (माषकलाइ) व्रीहिभेदे 'दशार्द्ध-गुञ्जं प्रवदन्ति माषमि'त्युक्ते 'गुञ्जाभिर्दशभिर्माष इत्युक्ते च परिमाणभेदे।

**माषकलाय** पु॰ माषाख्यः कलायः। स्वनामख्याते व्रीहौ

**माषपर्णी** स्त्री॰ माषस्येव पर्णान्यस्याः ङीप्। वनमाषे।

**माषभक्तबलि** पु॰ माषमिश्रितं भक्तमेवबलिः पूजोपहार द्रव्यम्। माषमिश्रिते भक्तरूपे पूजोपहारे।

**माषवर्द्धक** पु॰माषं माषपरमितं स्वर्णं वर्द्धयति काञ्चिदपि अपहरति वर्द्ध छेदने ण्वुल्। स्वर्णकारे।

**माषीण** न॰ माषाणां भवनं क्षेत्रं खञ्। माषव्रीहिभवन योग्ये क्षेत्रे। यत्। माष्यमप्यत्र।

**मास्** पु॰ माति परिच्छिनत्ति स्वगत्या कालम् मा-असुन्। चन्द्रे त्रिंशद्दिनात्मककालरूपे मासे च।

**मास** पु॰ माएव अण्। चन्द्रे त्रिंशद्दिनात्मके काले च। स च सौरसावनचान्द्रनाक्षत्रभेदाच्चतुर्विधः। मासश्चन्द्रस्तस्यायम् अण् चान्द्रे मासे तु मुख्यः। मस्यते परिमीयते मस-परिमाणे करणे घञ् पञ्चगुञ्जात्मके शब्दार्थे माष स्वार्थे कन् तत्रैव।

**मासन** न॰ मासं नयति नी-ड। सोमराजीलतायाम्।

**मासप्रमित** पु॰ मासं प्रमातुमारब्धः। प्र+मा-क्त। कालाः इति स॰। प्रतिपच्चन्द्रे। [भक्तमण्ड

**मासर** पु॰मस-परिणामे घञ् मासं परिणामं राति रा-क।

**मासान्त** पु॰ मासस्य सौरस्य चान्द्रस्य वाऽन्तः अवसानम्। मासावसाने संक्रान्त्यादौ।

**मासिक** त्रि॰ मासे भवः कालाट्ठञ्। मासभवे, प्रेतोद्देशेन कृतसजातीयतिथौ, प्रतिमासम्अमावस्यायां च कर्त्तव्ये श्राद्धे न॰। मासिकानि स्वकीये त्वि'ति स्मृतिः। 'पितॄणां मासिकं श्राद्धमन्वाहार्य्यं विदुर्बुधा इति स्मृतिः।

**मास्म** अव्य॰ मस-णिच् मप्। निवारणे।

**माह** माने भ्वा॰उभ॰सक॰सेट्। माहति ते अमाहीत् अमाहिष्ट। चङि न ह्रस्वः। [महाकुलीनोप्यत्र

**माहाकुल** त्रि॰महाकुले भवः अण्। महाकुलोद्भवे। खञ्।

**माहात्म्य** न॰ महात्मनो भावः ष्यञ्। महिमनि महत्त्वे।

**माहिष** न॰ महिष्या इदम् अण्। महिषीदुग्धादौ महिषस्येदम् अण्। तच्छृङ्गादौ त्रि॰। [सङ्करजातिभेदे।

**माहिष्य** पु॰ महिष्या भवः ष्यञ्। क्षत्रेण वैश्यायामुत्पन्ने

**माहेन्द्र** पु॰ महेन्द्रस्यायम् अण्। ज्योतिषोक्ते महेन्द्रादिसम्बन्धिनि दण्डभेदे। पूर्व्वस्यां दिशि, इन्द्रपत्न्यां, गवि च स्त्री॰ ङीप्। [स्त्रीगव्यां स्त्री॰ ङीप्

**माहेय** पु॰मह्या अपत्यम् मही+ढञ्! मङ्गले नरकासुरे च

**माहेश्वर** त्रि॰ महेश्वरादधिगतम् ततः आगत अण्। महेश्वरतः प्राप्ते। यवतिक्तायां स्त्री॰ ङीप्। तस्येदम् अण्।

'माहेश्वरी वृषारूढा, इत्युक्ते मातृभेदे दुर्गामातृ स्त्री॰ङीप्
**मि** क्षेपे स्वा॰उभ॰सक॰अनिट्। मिनोति मिनुते अमासीत् अमास्त। क्त्वि मप् च मित्रिमम्।
**मिच्छ** बधे भ्वा॰पर॰सक॰सेट्। मिच्छति अमिच्छीत्।
**मित** त्रि॰मि मा-वा-क्त। परिमिते, मर्द्दिते, अवच्छिन्ने, क्षिप्ते च
**मितङ्गम** पु॰ मितं परिमितं यद्-गच्छति गम-खच् मुम् च। गजे। परिमितगामिनि त्रि॰।
**मितद्रु** पु॰ मितं द्राति द्रवति वा कु नि॰। समुद्रे। [त्रि॰
**मितम्पच** पु॰मितं पचति पच-खच् मुम् च। कृपणे। परिमितपाचके
**मिति** स्त्री॰ मा-मि-वा क्तिन्। ज्ञाने, माने, अवच्छेदे, विक्षेपे च
**मित्त्र** न॰मिद्यति स्निह्यति मिद्-त्र। स्नेहान्विते सुहृदि, राज्ञां विषयानन्तरितरूपादितरस्मिन् राजनि तयोर्द्वयोरपि मध्यस्थनृपस्य राज्यहरणरूपैककार्य्यकरत्वात् मित्त्रत्वम्। मि-क्त्र। सूर्य्ये।
**मित्त्रयु** पु॰ मित्त्रं याति या-कु। मित्त्रवत्सले।
**मिथ** वधे मेधायाञ्च सक॰भ्वा॰उभ॰सेट्। मेथति-ते अमेथीत् अमेथिष्ट। चङि न ह्रस्वः।
**मिथस्** अव्य॰ मिथ-असुन्। रहसि, अन्योन्यस्मिन्नित्यर्थे।
**मिथिला** स्त्री॰ मिथ-किलच्। स्वनामख्यातायां राजधान्याम्
**मिथुन** न॰मिथ-उनन् किच्च। स्त्रीपुंसयोः मेषादितस्तृतीये राशौ च
**मिथ्या** अव्य॰ मिथ-क्यप्। अयथार्थे असत्ये।
**मिथ्यादृष्टि** स्त्री॰ मिथ्या-सफलस्यापि अफलत्वेन दृष्टिः। नास्तिकतायां सफलस्यापि वैदिककर्मणो निष्फलत्वज्ञाने।
**मिथ्यानिरसन** न॰ मिथ्या निरस्यतेऽनेन निर्+अस-क्षेपे करणे ल्युट्। शपथे।
**मिथ्याभियोग** पु॰ मिथ्याभूतेनासत्येनाभियोगः राज्ञोऽन्तिके वेदनम् अभि-युज-घञ्। शतं मे धारयतीत्यसत्यमुक्त्वा राज्ञोऽन्तिके अभियोगे।
**मिथ्याभिशंसन** न॰ मिथ्याभूतेनासत्येनाभिशंसनम् अपवादः। 'त्वया स्वर्णमपहृतमि'त्यपवादकथने।
**मिथ्याभिशाप** पु॰ मिथ्याभूतेनासत्येनाभिशापोऽपवादः। मिथ्यापवादे। [अतद्वति तद्वत्त्वेन ज्ञाने।
**मिथ्यामति** स्त्री॰ मिथ्याभूतस्य मतिः मन-क्तिन्। भ्रान्तौ-
**मिथ्योत्तर** न॰ कर्म॰ व्यवहारे 'मिथ्यैतत् नाभिजानामि तदा तत्र न सन्निधिः। अजातश्चास्मि तत्काले इति मिथ्या चतुर्विध'मित्युक्तप्रकारे, उत्तरभेदे, ('मिथ्योत्तरे पूर्ववादे') इति स्मृतिः। [अमेदिष्ट। चङि न ह्रस्वः।
**मिद** बधे मेधायाञ्च भ्वा॰उ॰सक॰सेट्। मेदति-ते अमेदीत्
**मिद्** स्नेहे भ्वा॰आ॰लुङि प॰अक॰सेट्। मेदते अमिदत् भावादौ क्ते मिन्नं मेदितम्।
**मिद्** स्नेहे वा चु॰उभ॰पक्षे भ्वा॰प॰अक॰सेट् इदित्। मिन्दयति अमिन्दत्-त। पक्षे मिन्दति अमिन्दीत्। [क्त मेदितं मिन्नम्
**मिद्** स्नेहे दि॰पर॰सक॰सेट्। मेद्यति-ते अमिदत् अमेदीत्।
**मिद्** स्नेहे चु॰ उभ॰सक॰सेट्। मेदयति-ते अमीमिदत्-त।
**मिल** श्लेषे तु॰ उभ॰सक॰सेट्। मिलति अमेलीत् अमेलिष्ट कुटादिरयमित्यन्ये तेन अमिलीत् ल्युटि मिलनम्।
**मिव** सेके भ्वा॰ पर॰सक॰सेट् इदित्। मिन्वति अमिन्वीत्।
**मिश** ध्वनौ कोपे च तु॰पर॰अक॰सेट्। मिशति अमेशीत्।
**मिशि(शी)** स्त्री॰ मिश-इन् वा ङीप्। मधुरिकायां, (मौरी) शतपुष्पायां, (सुलफा)जटामांस्याञ्च। अत्र पृ॰ मिषि-मिषी मिसि-मिसी इत्यादयः। उक्तार्थेषु। [अमिमिश्र(स्र)त् त
**मिश्र(स्र)** योजने अद॰चु॰उभ॰सक॰सेट्। मिश्र(स्र)यति-ते
**मिश्र** त्रि॰ मिश्र-अच्। संयुते उत्तरप्रदस्थः श्रेष्ठार्थे। यथा आर्य्यमिश्राः। गजजातिभेदे, ज्योतिषोक्ते कृत्तिकाविशाखा नक्षत्रगणे च पु॰। [इन्द्रोद्याने।
**मिश्रकावण** न॰ मिश्रकनामकं वनं पूर्व्वदीर्घो णत्वञ्च।
**मिश्रपुष्पा** स्त्री॰ मिश्रं पुष्पं यस्याः अजा॰टाप्। मेथिकायाम्
**मिश्रवर्ण** म॰ मिश्रश्चित्रो वर्णो यस्य। कृष्णागुरुणि। मिश्रित-वर्णमात्रे त्रि॰। [वार्त्ताक्याम्
**मिश्रवर्णफला** स्त्री॰ मिश्रवर्णं चित्ररूपान्वितं फलं यस्याः।
**मिश्रव्यवहार** पु॰ लीलावत्युक्ते गणनभेदे।
**मिश्रिता** स्त्री॰ 'मिश्रिता चैव विज्ञेया मिश्रितर्क्षैस्तु संक्रम' इत्युक्ते कृत्तिकाविशाखानक्षत्रकाले रविसंक्रमणे।
**मिश्रेया** स्त्री॰ मिश्र-अच् मिश्रा ईयते ई-गतौ यत् एय कर्म॰ शक॰। मधुरिकायां (मौरी) शतपुष्पायाञ्च (सुलफा)
**मिष** सेचने भ्वा॰पर॰सेट्। मेषति अमेषीत्। क्त्वा वेट्।
**मिष** पराभिभवेच्छायाम् तु॰पर॰सक॰सेट्। मिषति अमेषीत्।
**मिष** न॰ मिष-क। छले, स्पर्द्धने पु॰।
**मिषिका** स्त्री॰ मिषी-कन्। जटामांस्याम्।
**मिष्ट** त्रि॰ मिष-क्त। सिक्ते, स्पर्द्धिते च। मधुररसे पु॰ तद्वति त्रि॰
**मिह** सेचने भ्वा॰पर॰सक॰ अनिट्। मेहति अमिक्षत्।
**मिहिका** स्त्री॰ मिह-कुन् अत इत्त्वम्। नीहारे।
**मिहिर** पु॰ मिह-किरच्। सूर्य्ये, अर्कवृक्षे, वृद्धे, मेघे, वायौ, चन्द्रे, विक्रमादित्यसभास्थे पण्डितभेदे च।
**मी** बधे दि॰आ॰सक॰अनिट्। मीयते अमेष्ट।
**मी** बधे क्र्या॰उ॰सक॰सेट्। मीनाति मीनीते अमासीत्

अमास्त। क्त मीनः। [ति मयति अमीमत्-त अमैमीत्।
मी गत्यां मत्याञ्च वा चु॰उ॰पक्षे भ्वा॰पर॰सक॰सेट्। माययति-
मीढ त्रि॰ मिह-क्त। मूत्रिते।
मीढुष्टम पु॰ मीढुस्+तम नि॰। शिवे।
मीढ्वस् पु॰ मिह-कसु नि॰। शिवे। [वदतारभेदे च।
मीन पु॰ मी-नक्। मत्स्ये, मेषादितो द्वादशे राशौ भग-
मीनकेतन पु॰मीनः केतनो यस्य। कन्दर्पे। मीनध्वजादयोऽप्यत्र
मीननेत्रा स्त्री॰ मीनस्य नेत्रमिव पत्त्रिरस्याः। गण्डदूर्व्वायां
मीनाचीत्यादयोऽप्यत्र। [गौ॰ङीष्। शर्करायाम्।
मीनाण्डा स्त्री॰ मीनस्याण्डस्तदाकारा रेणुकाऽस्यस्य अच्
मीम शब्दे अक॰ गतौ सक॰ भ्वा॰ पर॰ सेट्। मीमति अमी-
मीत्। चङि न ह्रस्वः।
मीमांसक पु॰ मीमांसां वेत्त्यधीते वा वुन्। मीमांसाशास्त्रज्ञे,
तदध्येतरि च। मान-स्वार्थे सन् ण्वुल्। सिद्धान्तकारके
मीमांसा स्त्री॰ मान-स्वार्थे सन् अ। विचारपूर्व्वकतत्त्वनिर्णये
तत्प्रतिपादकग्रन्थभेदे च स च ग्रन्थः कर्म्मब्रह्मविषय
भेदेन द्विविधस्तत्र कर्म्मकाण्डविषयसंशयनिवारण प्रति-
पादको ग्रन्थो जैमिनिप्रणीतः सच पूर्व्वमीमांसात्वेन प्रसि-
द्धः ब्रह्मविषयसंशयनिर्णायकश्चरमः स च वेदान्तत्वेन प्रसिद्धः
मील निमेषे भ्वा॰पर॰अक॰सेट्। मीलति अमीलीत्। चङि
वा ह्रस्वः।
मीलन न॰ मील-ल्युट्। मुद्रणे, सङ्कोचने च।
मीलित त्रि॰मील-क्त। अप्रफुल्ले, सङ्कुचिते च 'मीलितं यद
भिरामताधिके' इति काव्यप्रकाशः।
मीव स्थूलीभवने भ्वा॰पर॰अक॰सेट्। मीवति अमीवीत्।
मु पु॰ मोचयति जीवान् स्वार्थे मुच डु। महेशे। [पलाण्डौ।
मुकन्दक पु॰ मुदः मुदे कन्दो यस्य कप् पृ॰ मुदो दलोपः।
मुकु पु॰ मुच-कु पृ॰ चस्य कः। मोक्षे, उत्सर्गे च।
मुकुट पु॰ मकि-उट पृ॰। शिरोभूषणे।
मुकुन्द पु॰ मुकुं ददाति दा-क पृ॰ मुम्। 'मुकुमव्ययमानन्त्य
निर्व्वाणमोक्षवाचकम् तद्ददाति चयो देवः मुकुन्दस्तेन की
र्त्तित' इति निरुक्ते विष्णौ।
मुकुम् अव्य॰ मकि उमुच् पृ॰। निर्व्वाणमोक्षे।
मुकुर पु॰ मकि उरच् पृ॰। दर्पणे, वकुलवृक्षे, कुलालदण्डे,
मल्लिकावृक्षे, कोलीवृक्षे, चोरके च।
मुकुल पु॰न॰ मकि उलच् पृ॰। ईषद्विकाशितकलिकायाम्
देहे, आत्मनि च। [वनयुद्रे (मुगानी)
मुकुष्टक पु॰ मुकुर्गलोत्सर्गस्तं स्तकति स्तक-अच् पृ॰ मत्सम्।
मुकूलक पु॰ मकि-ऊलच् कन्। दन्तिवृक्षे।
मुक्त त्रि॰ मुच-क्त। त्यक्ते, प्राप्तमोक्षे, आनन्दिते च।
मुक्तरसा स्त्री॰ मुक्तो रसो यस्याः। रास्नायाम्।
मुक्तसङ्ग त्रि॰ मुक्तः सङ्गोविषयासक्तिर्येन। त्यक्तसर्व्वविष-
यासङ्गे। परिव्राजके पु॰। [हस्तो येन। बहुदानशीले।
मुक्तहस्त त्रि॰ मुक्तः दानाय प्रसारितः न बद्ध इति यावत्
मुक्ता स्त्री॰ मुच-क्त। रास्नायाम् (मति) शुक्तिजे रत्नभेदे च।
मुक्तापुष्प पु॰ मुक्तेव शुभ्रं पुष्पमस्य। कुन्दवृक्षे।
मुक्ताप्रसू स्त्री॰ मुक्तां प्रसूते प्र+सू-क्विप् ह्र॰। शुक्तौ।
मुक्ताप्रालम्ब पु॰ मुक्तया मुक्ताविशिष्टतया प्रालम्बते अच्।
मुक्ताहारे।
मुक्ताफल न॰ मुक्ता फलमिव। मौक्तिके, लवलीफले, (नोयाड़)
कर्पूरे, वोपदेवकृते भक्तिप्रधाने ग्रन्थभेदे च 'चतुरेण चतुर्व्वर्ग
चिन्तामणिवणिज्यया हेमाद्रिर्वोपदेवेन मुक्ताफलमचीक-
रदि'ति तद्ग्रन्थान्तश्लोकः।
मुक्तालता स्त्री॰ मुक्तया लतेव। मुक्ताहारे।
मुक्तावली स्त्री॰ मुक्तया आवली हारभेदः। मुक्ताहारे। ह्र॰।
मुक्ताश्रेणौ भाषापरिच्छेदग्रन्थटीकायां सिद्धान्तमुक्तावल्यां च।
मुक्तास्फोट पु॰स्त्री॰ स्फुयते विदीर्य्यते स्फोटः मुक्तायै
स्फोटः। शुक्तौ।
मुक्ति स्त्री॰ मुच-क्तिन्। मोचने संसारबन्धनराहित्ये मतभेदेन
आत्यन्तिकदुःखनिवृत्तौ, ब्रह्मस्वरूपावाप्तौ च देहेन्द्रिया
भ्यामात्मनो बन्धशून्यत्वे च।
मुक्तिमण्डप पु॰ मुक्तिप्रदो मण्डपः शाक॰। काशीस्थे जग-
न्नाथक्षेत्रस्थे च मण्डपभेदे तीर्थे। [यावत्। शिह्लके।
मुक्तिमुक्त पु॰ मुक्तिर्मोचनं तेन मुक्तोरहितः संश्लिष्ट इति
मुख न॰खन-अच् डित् धातोर्मुट्च। 'प्रजास्तज्जा यतः खातं
तस्मादाकर्मुखं बुधा' इत्युक्ते देहावयवभेदे। 'ओष्ठौ च दन्तमूलानि
दन्ता जिह्वा च तालु च। गलो गलादि सकलं सप्ताङ्गं मुख-
मुच्यते' इत्युक्ते गलादिसप्तात्मकावयववति वदने। ग्टहस्य
निःसरणवर्त्मनि, इङ्गमण्डपादेः प्रवेशनिर्गमे, आरम्भे,
उपाये, नाटकादौ सन्धिभेदे, नाठकादिशब्दभेदे, आद्ये,
प्रधाने, शब्दे, नाटके, वेदे, च। नकुचवृक्षे पु॰ (डेफो)।
मुखगन्धक पु॰ मुखस्य गन्धो यस्य सेवनात् कप्। पलाण्डौ
मुखचपला स्त्री॰ आर्य्यावान्तरे छन्दोभेदे।
मुखज पु॰ ब्रह्मणो मुखाज्जायते जन-ड। विप्रे, 'ब्राह्मणोऽस्य
मुखमासीदि'ति श्रुतिः। [ल्यु। पलाण्डौ।
मुखदूषण पु॰ मुखं दूषयति सेवनात् दुर्गन्धेन दूष-णिच्

मुखधौता स्त्री॰ मुखं धौतं यया धाव-क्त ऊठ् पर॰नि॰। ब्राह्मणयष्टौ (बामनहाटि)।

मुखनिरीक्षक त्रि॰ मुखमितरास्यं निरीक्षते ण्वुल्। अलसे स हि अन्यो यदि स्वकार्यं कुर्यात् तदा नाहं करोमीत्याशयेन इतरमुखं निरीक्षमाणः स्वकार्य्ये न प्रवर्त्तते।

मुखपूरण न॰ मुखं पूरयति पूर-ल्यु। गण्डूषमितजलादौ।

मुखप्रिय न॰ मुखं प्रीणाति प्री-क उप॰। लवङ्गे मुखरोचकमात्रे त्रि॰। [त्रि॰

मुखभूषण न॰ मुखं भूषयति भूष-ल्यु। ताम्बूले। मुखमण्डने

मुखमण्डनक पु॰ मुखस्य मण्डनमिव इवार्थे कन्। तिलकवृक्षे। ६त॰। स्वार्थे कन् मुखभूषणे न॰।। ५ब॰ कप्। मुखभूषके त्रि॰।

मुखमोद पु॰ मुखं मोदयति मुद-णिच् अण्। शोभाञ्जने।

मुखर त्रि॰ मुखं मुखव्यापारं कथनं राति आदत्ते करोतीति यावत् रा-क। अप्रियवादिनि अप्रेवादिनि च 'मुखरस्तत्र हन्यते इति हितोपदेशः। काके, शङ्खे च पु॰।

मुखरित त्रि॰ मुखर इवाचरति मुखर+क्विप्-क्त। शब्दायमाने

मुखलाङ्गल पु॰ मुखं लाङ्गलमिव भूमिविदारकं यस्य। शूकरे

मुखवल्लभ पु॰ ६त॰। दाडिमवृक्षे तत्फलस्य मुखप्रियत्वात्। मुखप्रिये त्रि॰।

मुखवाचिका स्त्री॰ मुखं वाचयति अजडीकरोति सेवनात् वच णिच् ण्वुल्। अम्बष्ठायाम्। [कर्पूरादौ च।

मुखवास पु॰ मुखं वासयति सुरभीकरोति अण्। गन्धतृणे

मुखवासन पु॰ मुखं वासयति वासि-ल्यु। मुखसौरभकारके गन्धे। तद्वति त्रि॰।

मुखविष्ठा स्त्री॰मुखं विष्ठेव दुर्गन्धं यस्याः। तैलपायिकायां तन्मुखसंसर्गमात्रे हि द्रव्यान्तरे दुर्गन्धो भवति।

मुखव्यादान न॰ वि+आ+दा ल्युट् ६त॰। मुखप्रसारणे।

मुखशोधन न॰ मुखं शोधयति शुध-णिच्-ल्यु। त्वचे (दारचिनि) कटुरसे पु॰।

मुखशोधिन् पु॰ मुखं शोधयति शुध-णिच्-णिनि। जम्बीरे

मुखस्राव पु॰ स्रवति स्रु-ण ६त॰। लालायां मुखस्यन्दिजले

मुखाग्नि पु॰ मुखमेवाग्नितुल्यं शापदानेन दाहकत्वात् यस्य। विप्रे दावानले च।

मुखास्त्र पु॰ मुखमेवास्त्रं यस्य। कर्कटे।

मुख्य त्रि॰ मुखे आद्ये भवः यत्। प्रथमकल्पे, श्रेष्ठे च।

मुग्ध त्रि॰ मुह-क्त। मूढे। मोहयति अन्तर्भूतण्यर्थे मुहकर्त्तरि क्त। सुन्दरे। नायिकाभेदे स्त्री॰।

मुच दम्भे शाठ्ये भ्वा॰आत्म॰सक॰सेट्। मोचते अमोचिष्ट इदित्वाभावः। मुञ्चते।

मुच त्यागे चुरा॰ उ॰सक॰ सेट्। मोचयति-ते अमूमुचत्-त।

मुच त्यागे तु॰ मुचादि॰ उभ॰सक॰ अनिट्। मुञ्चति-ते अमुचत् अमुक्त। कर्म्मकर्त्तरि अकर्म्मकः 'मुच्यते सर्व्वपापेभ्य, इति पुराणम्। [नृपभेदे च।

मुचकुन्द पु॰ मुच-कु मुचुः कुन्द इव। स्वनामख्याते पुष्पवृक्षे,

मुज ध्वनौ अक॰ मार्ज्जने सक॰ वा चुरा॰पक्षे भ्वा॰पर॰सेट्। मोजयति ते मोजति अमूमुजत्-त अमोजीत्। इदित्वपक्षे। मुञ्जयति ते मुञ्जति अमुमुञ्जत् त अमुञ्जीत्।

मुञ्ज पु॰ मुजि-अच्। (मुज) रज्जुसाधने तृणभेदे।

मुञ्जकेशिन् पु॰ मुञ्ज इव केशः अस्त्यस्य इनिः। विष्णौ।

मुञ्जर न॰ मुजि-अरन्। शालूके।

मुट मर्दने भ्वा॰पर॰सक॰सेट् इदित्। मुण्टति अमुण्टीत्।

मुट चोदे वा चु॰उभ॰ पक्षे भ्वा॰पर॰सक॰ सेट्। मोटयति ते मोटति अमूमुटत् त अमोटीत्। [अमोट

मुट चोदने आक्षेपे च तु॰कु॰पर॰सक॰सेट्। मुटति अमुटीत्

मुठ पलायने भ्वा॰आ॰अक॰सेट् इदित्। मुण्ठते अमुण्ठिष्ट।

मुड केशादिच्छेदे मर्दने च भ्वा॰पर॰सक॰सेट् इदित्। मुण्डति अमुण्डीत्।

मुड मज्जने भ्वा॰आ॰अक॰सेट् इदित्। मुण्डते अमुण्डिष्ट

मुण प्रतिज्ञाने तु॰पर॰सक॰सेट्। मुणति अमोणीत्।

मुण्ड पु॰न॰ मुडि कर्मणि घञ्। मस्तके, बोले, मुण्डायसे च दैत्यभेदे, नापिते, स्थाणुवृक्षे च पु॰। मुण्डिते त्रि॰। महाश्रावणिकायां, मुण्डरीकायाञ्च स्त्री॰ टाप्।

मुण्डक पु॰ मुण्डयति मुडि-णिच्-ण्वुल्। नापिते।

मुण्डचणक पु॰ मुण्डश्चणकइव। कलाये।

मुण्डन न॰ मुडि-भावे ल्युट्। केशच्छेदे वपने।

मुण्डफल पु॰मुण्डं शिर इव फलमस्य। नारिकेले। [भेदे

मुण्डशालि पु॰ मुण्डः शूकशून्यः शालिः। निःशूके शालि

मुण्डायस न॰ मुण्डमयः अच् समा॰। लौहभेदे।

मुण्डितिका स्त्री॰ मुडि-इत स्वार्थे कन् अत इत्वम् टाप्। (मुण्डारी) वृक्षभेदे।

मुण्डिन् पु॰ मुण्डयति मुडि-णिच्-णिनि। नापिते।

मुण्डीरी स्त्री॰ मुडि-ईरच् गौ॰ङीष्। स्वनामख्याते वृक्षभेदे

मुद संमार्ज्जने चु॰उ॰सक॰सेट्। मोदयति ते अमूमुदत् त

मुद हर्षे भ्वा॰आ॰अक॰सेट्। मोदते अमोदिष्ट। [च

मुद्(दा) स्त्री॰ मुद॰सम्प॰क्विप् वा टाप्। हर्षे, नागमातोषधौ

मुदिर पु० मुद-किरच् । मेघे, भेके च । कामुके त्रि० ।

मुद्ग पु० मुद्-गक् नेट् । (मुग) कलायभेदे, पक्षिभेदे, जलकाके च

मुद्गपर्णी स्त्री० मुद्गस्येव पर्णमस्याः । (मुगानी) वनमुद्गे ।

मुद्गर न० मुदं गिरति गॄ-अच् । मल्लिकाभेदे, लोष्टभेदने, (मुगुर) पुष्पवृक्षे, कर्मारवृक्षे (कामराङ्गा) च पु०। स्वार्थे कन् । तत्रैव ।

मुद्गल न० मुदं गिलति गॄ-अच् रस्य लः । वनतृणे, रोहिषतृणे च । गोप्रियतृणे प्रवरकारके मुनिभेदे, नृपभेदे च पु० ।

मुद्गष्ट पु० मुद्गं स्तकति प्रतिबध्नाति स्तक-ड पृ० षत्वम् । वनमुद्गे । अच् । मुद्गष्टकोऽप्यत्र ।

मुद्रा स्त्री० मुद-रक् । प्रत्ययकारिण्याम्, (मोहर) अङ्गुलिस्थे मुद्राङ्कनयुक्ताङ्गुलीयके, स्वर्णरौप्यादितङ्कायाम्, अप्रकाशे, 'मुद्रालिपिः शिल्पलिपिर्लिपिर्लेखनसम्भवा । गुण्डिका घुणसम्भूता लिपयः पञ्चधा मता' इत्युक्तलिपिमध्ये लिपिभेदे, 'तन्त्रप्रसिद्धे वीराचारसेव्ये पृथुकास्तण्डुला भ्रष्टा गोधूमचणकादयः । तस्य नाम भवेन्मुद्रे'त्युक्ते पञ्चमकारादिद्रव्यभेदे, देवविशेषाराधनायाङ्गुल्यादिसन्निवेशविशेषे 'मुद्रामक्षगुणमि'ति तन्त्रम् सङ्कोचे च ।

मुद्रालिपि स्त्री० मुद्रया लिपिः । पञ्चधाविभक्तलिपिमध्ये लिपिभेदे (छापार अक्षर)

मुद्रिका स्त्री० मुद्रैव क्षुद्रा वा मुद्रा कन् । स्वर्णरौप्यादिनिर्म्मिते अङ्गुलिस्थे अङ्कनसाधनयोग्ये पदार्थे ।

मुद्रित त्रि०मुद्रा जाताऽस्य इतच् । अप्रकाशिते, अङ्किते च ।

मुधा अव्य० मुह का पृ० हस्य धः । मिथ्याशब्दार्थे ।

मुनि पु० मन-इन् पृ० उत्त्वम् । दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः । वीतरागभयक्रोधः स्थिरधीर्मुनिरुच्यते, इत्युक्तलक्षणे स्थिरचित्ते वीतरागादौ जने । ते च सन्ति विष्णुहारीतादयः । सप्तसंख्यायाञ्च ।

मुनिखर्ज्जूरी स्त्री०६त० । खर्ज्जूरीभेदे । [सप्तच्छदे(छातिम)

मुनिच्छद पु०मुनिसंख्याताः सप्तसंख्याः छदाः प्रतिपर्णं यस्य।

मुनितरु पु० मुनिरगस्त्यनामकस्तरुः । वकवृक्षे ।

मुनिद्रुम पु०मुनीनां प्रियो मुनिनामको वा द्रुमः । श्योनाकवृक्षे वकवृक्षे च । [खञ्जने च । ६त० । ऋषिस्तुते ।

मुनिपुत्रक पु० मुनेः पुत्रः संज्ञायां कन् । दमनकवृक्षे,

मुनिपुष्प न० मुनिद्रुमस्य पुष्पं भीमो भीमसेनवदुत्तरपदलोपः । वकपुष्पे । [भोजनाभावे च ।

मुनिभेषज न०मुनीनां भेषजमिव । हरीतक्यां, अगस्त्ये, लङ्घने,

मुनीन्द्र पु० मुनिः इन्द्र इव । बुद्धे । ७त०। ऋषिश्रेष्ठे ।

मुन्थ गत्यां भ्वा०पर० सक०सेट् क्त्वा वेट् । मुन्थति अमुन्थीत् ।

मुन्था स्त्री० ताजकप्रसिद्धे जन्मवर्षावधि एकैकवर्षे लग्नत एकैकराश्यन्तरे लग्नस्य गतिभेदे । मुथहाप्यत्र।

मुन्यन्न न० मुनियोग्यमन्नम् । नीवारकन्दादौ ।

मुमुक्षु त्रि०मोक्तुमिच्छुः मुच-सन्-उ । मोक्षेच्छावति । संसारबन्धनाभावेच्छावति । यतौ पु० ।

मुमूचान पु० मुच-कान पृ० दीर्घः । मेघे, मुक्तवति त्रि० । 'द्रुपदादिव मुमूचान इति वेदमन्त्रः ।

मुमूर्षु त्रि० मर्त्तुमिच्छुः मृ-सन्-उ । आसन्नमरणे ।

मुर वेष्टने तु०पर०सक०सेट् । मुरति अमोरीत् ।

मुर पु० मुर-क । दैत्यभेदे, 'पार्थैनाथ द्विषन् मुर'मिति माघः

मुर पु०मुर-क । वेष्टने । स्वनामख्याते गन्धद्रव्ये स्त्री०टाप् ।

मुरज पु० मुरात् वेष्टनात् जायते जन-ड । मृदङ्गे वाद्यभेदे

मुरजफल पु०मुरज इव फलं यस्य । पनसवृक्षे । मृदङ्गफलादयोऽप्यत्र ।

मुररिपु पु० ६त० । विष्णौ । मुरारिमुरमथनादयोऽप्यत्र।

मुरला स्त्री० मुरं लाति ला-क। नर्म्मदायाम्। 'मुरलामारुतोद्धूते'ति रघुः। वंशीनाम्नि वाद्ये गौरा०ङीष् । [योऽप्यत्र

मुरलीधर मुरलीं धरति धृ-अच्। श्रीकृष्णे, मुरलीवादनाद-

मुर्च्छ मोहे वृद्धौ च भ्वा०पर०सक०सेट्। मूर्च्छति अमूर्च्छीत् । भावे क्त । मूर्त्तम् मूर्च्छितम् ।

मुर्मुर पु० मुर-क । पृ०द्वित्वम् । तुषाग्नौ, कन्दर्पे, सूर्य्याश्वे च

मुर्व बन्धे भ्वा०पर०सक०सेट्। मूर्वति अमूर्वीत् निष्ठायामनिट्

मुल रोपणे चु०उभ०सक०सेट् । मोलयति ते अमूमुलत् त

मुशटी स्त्री० मुष-अटच् गौ०ङीष् पृ० । सितकङ्गौ ।

मुश(स)ली स्त्री०मुष मुस वा अलक् पृ० षस्य शः गौरा०ङीष् तालमूल्याम् वल्गाञ्च स्वार्थे कन् पक्षमान् ।

मुष वधे भ्वा०पर०सक०सेट् । मोषति अमोषीत् ।

मुष छेदने दिवा०पर०सक०सेट्। मुष्यति अमुषत्-अमोषीत् । पुषादिरयमित्यन्ये ।

मुष लुण्ठने क्र्या०पर०द्विक०सेट् । मुष्णाति अमोषीत् ।

मुष(स)(श)ल पु०मुष कलन् । पृ० षस्य वा सः (शा)वा अयोग्रे स्वनामख्याते धान्यादिकण्डनसाधने पदार्थे ।

मुषा स्त्री० मुष-क-टाप् । धातुद्रावके पात्रभेदे (मुची)

मुषित त्रि० मुष-क्त । अपहृतद्रव्ये जने ।

मुष्क पु० मुष-टाप्। पुरुषचिह्नभेदे अण्डकोषे, (घण्टाभारुल) वृक्षे' तस्करे, मांसले, च स्वार्थे कन् तत्रैव ।

मुष्कशून्य पु०३त०। वृषणरहितेऽराश्याकम्लःपुरषके (खोजा)

